॥ श्रीः ॥

महाकविश्रीत्रिविक्रमभट्टविरचिता

# दमयन्तीकथा

अथवा

# नलचम्पूः ।



चेन्नपत्तनस्थित पच्चयप्पपाठशाला संस्कृताध्यापकेन

कौशिकवंशमुक्ताफलेन

श्वेतारण्यनारायणशर्मणा

विरचितया

परिमलाख्यया व्याख्यया संवलिता

सा च

शके १९०३ वत्सरे

चेन्नपुर्यां

लिङ्गश्रेष्ठिवीथीस्थ रायल् विक्टोरिया मुद्रायन्त्रशालाधिपतिना स्वीय मुद्रायन्त्रे

मुद्रिता सद्विजयतेतराम् ।

# शुद्धपत्रिका

| पुटे | पङ्क्तौ | शुद्धम् | अशुद्धम् |
|---|---|---|---|
| 1 | 24 | कारय | काराय |
| 2 | 14 | लतायाः जनने उत्पत्तौ जरठ | लतायाः जरठ |
| 3 | 25 | शलोश्च | शेलाश्च |
| 8 | 5 | विरिञ्चि | विरञ्चि |
| 10 | 6 | दंभसां | दभ्यसां |
| 12 | 14 | समस्ता | समस्ताः |
| 12 | 22 | विषयाणां | विवयाणां |
| 13 | 16 | "योपधात्" | द्वंद्वमनोज्ञादिभ्यश्च |
| 15 | 15 | इयूति | इव्राति |
| 16 | 24 | तथा | तैथा |
| 19 | 24 | मनो | मनौ |
| 20 | 4 | भित्ति | मित्ति |
| 22 | 18 | येषान्त | येषात्त |
| 40 | 18 | पतीनां | पीतनां |
| 41 | 26 | शोभते | शाभते |
| 41 | 31 | सारंगाणां | सारगाणां |
| 43 | 21 | फुल्ल | पुल्ल |
| 44 | 16 | धवलं | धबल |
| 44 | 21 | रन्तुं | रन्तु |
| 49 | 3 | घोर | धोर |
| 49 | 10 | श्वल | श्वल |
| 49 | 25 | परितो | परित |
| 49 | 28 | नलोवा | नलोव |
| 51 | 7 | वध | बध |
| 70 | 27 | रक्ति | रिक्ति |

| पुटे | पङ्क्तौ | शुद्धम् | अशुद्धम् |
|---|---|---|---|
| 72 | 23 | रन्ध्रैर्म्तौ | रन्ध्रैर्म्तै |
| 73 | 13 | सहिताः | सहि |
| 74 | 3 | बिन्दु | बिन्द |
| 75 | 24 | धातोः क्त | धातोः क्तः |
| 75 | 28 | क्रोडयूथं | क्रोयूडथ |
| 78 | 16 | यस्मिंस्तत् | यमिस्तत् |
| 79 | 9 | पुटविघटितनिकट | पुट......कट |
| 88 | 7 | तेषु | तषु |
| 91 | 9 | स्रक्च | सृक्च |
| 91 | 18 | पिपर्ति | पिपर्त |
| 92 | 15 | पक्षे | पक्ष |
| 95 | 1 | हुति | हति |
| 95 | 5 | सरैः | सरै |
| 96 | 9 | यितुं | यितु |
| 96 | 23 | अध्यासितं | अध्यासित |
| 100 | 8 | पुरुष | षुरुप |
| 101 | 12 | जनश्च | जनश्च |
| 101 | 15 | रुट् | रुट्र |
| 102 | 22 | नूतनंस्तुल्यं | नूतनस्तुल्य |
| 103 | 19 | भुवि | भूवि |
| 105 | 21 | वाक्यं | वाक्ये |
| 107 | 13 | कपोलयोः | कपोलयो |
| 107 | 16 | सक्तं | सक्त |
| 108 | 20 | हरिद्व | हरिद्र |

अथ

# दमयन्तीकथा ।

## परिमलाख्यव्याख्यया समेता

### प्रथम उच्छ्वासः ।

जयति गिरिसुतायाः कामसन्तापवाहि-
न्युरसि रसनिषेकश्चान्दनश्चन्द्रमौलिः ।
तदनु च विजयन्ते कीर्तिभाजां कवीना-
मसकृदमृतबिन्दुस्यन्दिनो वाग्विलासाः १

वन्दे वन्द्यं विबुधै स्सरसपदप्रास चित्रिताशेषं ।
बलिराजमदसि विश्रुतविमलख्यातिं * त्रिविक्रमन्देवम् ॥

१. अथ तत्रभवान् महाकविः श्रीत्रिविक्रमभट्टः 'गद्यपद्यमयं काव्यं चम्पूरित्याभिधीयते' इति लक्षणलक्षितं नळचम्पू काव्यमारभमाणः प्रत्यूहपरिहारायेष्ट देवतानुकीर्तनमारचयति । **जयतीति** । गिरिसुतायाः पार्वत्याः कामसन्तापं मन्मथजनिततापं ताच्छील्येन वहति धारयतीति तथाभूत न्तस्मिन् उरसि वक्षसि चन्दनस्यायं चान्दनः 'तस्येद' इत्यण् रसस्य द्रवस्य निषेकः नितरामभिषेक इव (तापनिवर्तकत्वशैत्यसौरभ्याह्लादादिकरः) शिवपक्षे रसाः शृङ्गारादयः निषिच्यन्तेनेनेति रसनिषेकः रस धार इत्यर्थः । चन्द्रमौलि शिवः जयति सर्वोत्कर्षेण वर्तते तेच रसाः कविभिरेव व्यक्तीकर्तव्या इति कृत्वाताननुकीर्तयति । **तदन्विति** । तदनु भगवदनुकीर्तनानन्तरम् । कीर्तिभाजां यशस्विनाम् । कवीनां वाल्मीकिव्यासादीनां असकृत् सदा अमृतस्य सुधायाः बिन्दून् पृषन्ति ताच्छील्येन स्यन्दन्ते स्रावयन्तीति

---

* त्रिविक्रमकविरित्यर्थोपि ध्वन्यते अयं कवि कस्यचिद्राज्ञः सभापण्डितस्य देवादित्यनाम्न द्विजस्य पुत्रः बाल्ये मूर्ख एवास्त कदाचित् देवादित्ये देशान्तरंगते पूर्वन्तदुद्वेजितः कश्चिद्विद्वान् तदन्तरमन्विष्यतत्रागत्य 'राजन् मयासह शास्त्रार्थं केनापि विदुषाकाराय अन्यथाजयपत्रन्देहि' इति राज्ञे निवेदितवान् राजातु त्रिविक्रममाहूतवान् त्रिविक्रमस्तु स्वगृहवासिनीं पित्राराधितां सरस्वतीं 'त्वत्प्रसादेन तं विद्वांसं विजयेयेति' प्रार्थितवान् दयालुस्साच 'यावत् त्वत्पिताऽऽगमिष्यति तावत्त्वमुखे वसामि' इत्युक्त्वा तन्मुख विवेश तदनु प्राप्तसरस्वतीवरप्रसादः त्रिविक्रमः

जयति मधुसहायः सर्वसंसारवल्ली-
जननजरठकन्दः कोऽपि कन्दर्पदेवः ।
तदनु पुनरपाङ्गोत्सङ्गसंचारितानां
जयति तरुणयोषिल्लोचनानां विलासः ॥ २ ॥
अगाधान्तःपरिस्पन्दं विबुधानन्दमन्दिरम् ।
वन्दे रसान्तरप्रौढं स्रोतः सारस्वतं वहत् ॥ ३ ॥

तथोक्ताः वाचां उक्तीनां विलासाः विभ्रमाश्च चतुरोक्तय इति यावत् विजयन्ते सर्वोत्कृष्टावर्तन्ते । 'विपराभ्यां जे:' इति तङ् । अत्र गिरिसुतायाः दमयन्त्याः 'गिरिर्भीमनृपेसूर्ये स्वभावे पर्वते जले' इति कोशात् । चन्द्राणां चन्द्रवश्यानां मौलिः प्रधानभूतः नळ इतिच प्रबन्धार्थोपि प्रतीयते । अत्र धर्मवाचकलुप्तोपमा 'उपमायत्रसादृश्यलक्ष्मीरुल्लसतिद्वयोः' इति लक्षणात् । मालिनीवृत्तम् 'ननमयययु-तेय मालिनीभोगिलोकैः' इति लक्षणात् ॥

२. सहायादिसहितः कामः शिवावपि तापयतीति तमप्यनुकीर्तयति । **जयतीति** मधुसहायः वसन्तसखः सर्वस्याः संसारवल्याः प्रपञ्चलतायाः जरठकन्दः कठिन-कन्दः कोपि अनिर्देश्यवैभवः कन्दर्पदेवः कामदेवः जयति कामस्य जगद्विजिताव-व्यभिचारिसाधनमनुकीर्तयति । **तदन्विति** । तदनु कामकीर्तनानन्तर अपाङ्गोत्सङ्गे नेत्रान्तप्रदेशे 'अपाङ्गौ नेत्रयोरन्तौ' इत्यमरः । सञ्चारितानां कामिसमाकर्षणाय प्र-वर्तितानां तरुणयोषितां युवतीनां लोचनानां नयनानां विलासः विभ्रमः पुनः पूर्वो-क्तसाधनविलक्षणं यथा तथा 'पुनरप्रथमेभेदे' इत्यमरः जयति । वृत्तंपूर्ववत् । अश्लिष्टपरपरित रूपकमलङ्कारः । 'आरोपविषयस्य स्यादतिरोहितरूपिणः । उपरञ्ज-कमारोप्यमाणं तद्रूपकम्मतम्' इति लक्षणात् ॥

३. 'वाग्विलासाः विजयन्ते' इत्युक्ताया वाचोगुणानेवश्लोकद्वयेनाह । अगा-धेति । अगाधः महार्थविशिष्टत्वेनालब्धमध्यः अन्तर्मनसि परिस्पन्दः चमत्कार...

तं बुध सभायां विजित्यलब्धोत्कर्षः पित्रागमनात् पूर्वं कमपि ग्रन्थं निर्मास्यामि इति विचिन्त्य पुण्यश्लोकनलवर्णनेनात्मानं कृतार्थयिष्यामीतिच विभाव्य नलचम्पू-काव्यं प्रारेभे एवं प्रवृत्तस्यास्य सप्तमोच्छ्वाससमाप्तिदिन एव पिता आजगाम ग्रन्थोपि तत्रैव पूर्तिमवजगाहे इत्यभियुक्तकथा । अत्र चम्प्वां प्रथमोच्छ्वासे कादम्बरी-कथाकर्तृबाणभट्टनामोल्लेखनेन एतच्चम्पू षष्ठोच्छ्वासैकोनत्रिंशश्लोकस्य 'पर्वतभेदि-पवित्रम्' इत्यस्य भोजराजकृत सरस्वतीकण्ठाभरणे एकावल्यलङ्कारोदाहरणेनच अस्य कवेः बाणभोजयोरन्तराळकालवर्तित्वं ज्ञायते अस्यतु यमुनात्रिविक्रम इति नामान्तरमपि अस्याः नळचम्प्वाश्च दमयन्तीकथेतिच नामान्तरमप्यस्ति ।

प्रसन्नाः कान्तिहारिण्यो नानाश्लेषविचक्षणाः ।
भवन्ति कस्यचित्पुण्यैर्मुखे वाचो गृहे स्त्रियः ॥ ४ ॥

किं कवेस्तेन काव्येन किं काण्डेन धनुष्मतः ।
परस्य हृदये लग्नं न घूर्णयति यच्छिरः ॥ ५ ॥

शेषो यस्य तथोक्तं पक्षे अगाधः गम्भीरः अन्तर्मध्ये परिस्पन्दः समन्ताच्चलनं यस्य तथोक्तं । विबुधानां देवानां विदुषाञ्च पक्षे वीनां पक्षिणां बुधाः राजहंसादयः तेषां आनन्दस्य हर्षस्य मन्दिरं गृहं रसानां शृङ्गारादीनां अन्तरेण विशेषेण प्रौढं प्रगल्भं पक्षे रसायाः भूमेः अन्तरे मध्ये प्रवहतिस्म प्रौढं प्रपूर्वाद्वहतेः कर्तरिक्तः 'प्रादूहोढ' इत्यादिना वृद्धिः । वहन् प्रवर्तमानं पक्षे प्रसरत् । सरस्वती वाणी नदीभेदश्च तस्या इदं सारस्वतं स्रोतः नैरन्तर्यं प्रवाहश्च वाणीपक्षे स्रोतश्शब्दस्य लक्षणया नैरन्तर्यमर्थः वन्दे नमामि स्तौमि वा । अत्रश्लोकवृत्तं 'पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः । षष्ठं गुरु च विज्ञेयमेतच्छ्लोकस्य लक्षणमिति ? अत्र श्लेषालकारः नानार्थसंश्रयः श्लेषः वर्ण्यावर्ण्योभयाश्रित इति ॥

४. **प्रसन्ना इति** । प्रसन्नाः प्रसादगुणोपेताः तल्लक्षणन्तु—'प्रसिद्धार्थपदत्वं यत्सप्रसादोनिगद्यते' इति । अन्यत्र प्रसन्नास्तोषयुक्ताः । कान्त्या कान्तिगुणेन अन्यत्र शोभया हर्तुंशीलं यासामिति तथोक्ताः कान्तिलक्षणन्तु 'अत्युज्ज्वलत्वंबन्धस्यकाव्येकान्तिरितीष्यते' इति । नाना सभङ्गत्वाभङ्गत्वभेदेन नानाविधं श्लेषं श्लेषालङ्कारं विशेषेण चक्षते वदन्तीति तथोक्ताः अन्यत्र नाना अनेकविधे 'स्पष्टक विद्धक उद्धृष्ट पीडन लतावेष्टक वृक्षाधिरूढ तिलतण्डुल क्षीरनीर ऊरूपगूढ जघनोपश्लेष स्तनालिङ्गन ललाटिक रूपे द्वादशविधे आश्लेषे आलिङ्गने विचक्षणाः समर्थाः मुखे वाचः गृहे स्त्रियश्च कस्यचित् पुण्यपुरुषस्यैव पुण्यैः भवन्ति । वृत्तंपूर्ववत् । तुल्ययोगितालङ्कारः तल्लक्षणन्तु—'वर्ण्यानामितरेषां वा धर्मैक्यंतुल्ययोगिता' इति ॥

५. एवं सत्कविवाचः प्रशस्यासत्कविगिरोनिन्दति श्लोकद्वयेन । **किमिति** । यत्काव्य काण्डञ्च परस्य इतरस्य शत्राश्च । हृदये मनसि वक्षसिच । लग्नं संबद्धं सत् ( परस्य ) शिरः मस्तकं नघूर्णयति श्लाघया मूर्छयाच नभ्रमयति । कवेः तेन काव्येन किं प्रयोजनं । धनुष्मतः धन्विनः तेन काण्डेन बाणेनच । 'काण्डो स्त्रीदण्डबाणार्ववर्गावसरवारिषु' इत्यमरः । किं नकिमपीत्यर्थः । वृत्तालङ्कारौपूर्ववत् ॥

अप्रगल्भाः पदन्यासे जननीरागहेतवः
सन्त्येके बहुलालापाः कवयो बालका इव ॥ ६ ॥
अक्षमालापवृत्तिज्ञा कुशासनपरिग्रहा ।
ब्राह्मीव दौर्जनी संसद्वन्दनीया समेखला ॥ ७ ॥
रोहणं सूक्तरत्नानां बृन्दं वन्दे विपश्चिताम् ।
यन्मध्यपतितो नीचः काचोऽप्युच्चैर्मणीयते ॥ ८ ॥
अत्रिजातस्य या मूर्तिः शशिनः सज्जनस्य च ।
क्व सावैरात्रिजातस्य तमसो दुर्जनस्य च ॥ ९ ॥

६. **अप्रगल्भा इति** । पदानां सुबन्ततिङन्तपदानां चरणानाञ्च न्यासे निरन्तरप्रयोगे निक्षेपेच अप्रगल्भाः असमर्थाः जनानां विद्वज्जनानां नीरागे रागाभावे चमत्काराभाव इति यावत् हेतवः कारणभूताः अन्यत्र जनन्याः मातुः रागहेतवः अनुरागकारणभूताः बहुलः अधिकः आलापः निस्सारभाषणं येषान्तथोक्ताः अन्यत्र बह्वीर्लाला: निष्ठीवनजलानि पिबन्तीति बह्वीर्लाला एव आपः येष्वितिवा बहुलालापाः 'ऋक्पूरप्' इत्यादिना अप्शब्दस्य समासान्तः अप्रत्ययः एके केचित् कवयः बालका इव सन्ति । अत्र उपमालङ्कारः ॥

७. निष्कारणं परोत्कर्षासहिष्णून् काव्यप्रवृत्तिभंगहेतून् क्षुद्रान् शब्दमात्रेण गौरवयन्नाह । **अक्षेति** । अक्षमया असहनेन आलापस्य भाषणस्य वृत्तिं स्थितिं, जानातीति तथोक्ता अन्यत्र अक्षमालायाः जपार्थं रुद्राक्षादिमालिकायाः अपवृत्तिं भ्रमणं जानातीतितथोक्ता कुशासनस्य कुत्सितशिक्षणस्य अन्यत्र दर्भासनस्य परिग्रहः स्वीकारो यस्यास्तथोक्ता । समे साधावपि खला शत्रुभूता अन्यत्र मेखलया मौञ्ज्या सहिता दुर्जनानां इयं दौर्जनी संसत् सभा ब्रह्मणां ब्राह्मणानामियं ब्राह्मी संसादिव वन्दनीया नमस्कार्येत्युपहासवाक्यं । अत्रोपमालंकारः ॥

८. निन्द्यमपिविद्वद्वृन्दससंर्गेणानिन्द्यं भवतीत्याह । रोहणमिति । सूक्तानां सुभाषितानामेव रत्नानां प्रशस्तरत्नानाञ्च रोहणं उत्पत्तिस्थान माणिक्यशैलञ्च विपश्चितां विदुषां बृन्दं संघं वन्देनमामि स्तौमिवा यस्य बृन्दस्य मध्यं पतितः गतः नीचः अल्पः काचः कच्यन्ते बध्यन्ते अर्था अनेनेति काचः प्रबन्धः क्षारमृद्विकारश्च उच्चैः श्रेष्ठः **अमणिर्मणिर्भवति मणीयते उत्कृष्टरत्नायते** लोहितादेराकृतिगणत्वात्क्यष् । विद्वांसः क्षुद्रमपि प्रबन्धं व्याख्यानप्रागल्भ्यादुत्कर्षं प्रापयन्तीति भावः—अत्र श्लिष्टाश्लिष्टरूपकालंकारः मणिवदाचरतीति विवरणे उपमाच ॥

९. सज्जनदुर्जनयोः मूर्त्यापि महदन्तरमस्तीत्याह । **अत्रीति** । अत्रेः अत्रिमुनेर्जातस्य (अत्रिनयनादिन्दुरुत्पन्न इति पौराणिकीकथा) शशिनश्चन्द्रस्य या मूर्तिः

निश्चितं ससुरः कोऽपि न कुलीनः समेमतिः ।
सर्वथासुरसंबद्धं काव्यं यो नाभिनन्दति ॥ १० ॥

सद्‌दूषणापि निर्दोषा सखरापि सुकोमला ।
नमस्तस्मै कृता येन रम्या रामायणी कथा ॥ ११ ॥

उज्ज्वलं शरीरं वै प्रसिद्धा सा मूर्तिः रात्रौ जातस्य तमसः अन्धकारस्य क अविजातस्य न त्रिभिः अपितु मातापितृभ्यामेव जातस्य सज्जनस्य या मूर्तिः अनिन्द्यं शरीरं अवैरा शात्रवरहिता सा मूर्तिः त्रिजातस्य त्रिभिः पितृभ्यां अन्येन पारदारिकेणच्च जातस्य दुर्जनस्य क शुद्धाशुद्धयोश्चन्द्रान्धकारयोरिव महदन्तरमिति भावः अत्रसभंगश्लेषमूलका तुल्ययोगिता ॥

१०. श्लेषभंग्या सत्काव्यनिन्दकंनिन्दति। **निश्चितमिति** । सर्वथा सर्वप्रकारेण सुष्ठु रसाः शृंगारादयो यत्र तत् सुरस यथा तथा बद्धं रचितं काव्यं ग्रन्थ यः नाभिनन्दति नश्लाघते सः निश्चितं ध्रुवं ससुरः सुरया मद्येन सहितः मद्यपायीत्यर्थः किञ्च सः कुलस्यापत्यं कुलीनः 'कुलात्खः' इति खः न कुलीनः नकुलीनः दुष्कुलजः । नशब्दसमासः नञ्तत्पुरुषे अकुलीन इति स्यात् । कोपः अस्यास्तीति कोपी कोपीचासौनकुलीनश्च कोपिनकुलीनः कोपवान् दुष्कुलजश्च इति मे मतिः यद्वा समे साधुजने भमतिः पक्षरहितः । सर्वथा असुरैः संबद्ध सहितं काव्यं शुक्रं यः नाभिनन्दति सः कोऽपि सुरः देवः सः कौ भूमौ लीनः स्थितिमान् न इति मे मतिः यद्वा मा लक्ष्मीः इः कामः ताभ्यां सहितः समेः विष्णुः तस्मिन् मतिर्यस्य सः समेमतिः विष्णुपक्षीय इत्यर्थः । एतद्ग्रन्थे एतादृशेषु पद्येषु प्रायेण सभगः अभंगोवा श्लेषएवालंकारः ॥

११. वाग्विलासाधारान्वाल्मीक्यादीन् कतिचित् कवीन्वर्णयन्नाह । **सद्‌दूषणेत्यादिना** दूषणैः दोषैः (दूषणाख्यरक्षसाच) सहितापि निर्दोषा खरेण अर्थकाठिन्येन ( खराख्यराक्षसेनच ) सहितापि सुकोमला अकठिनार्था अतएव रम्या । रामः ईयते गम्यतेज्ञायतेनयेतिरामायणी 'करणाधिकरणयोश्च' इति ल्युट् । 'युवोरनाकौ' इत्यनादेशः 'टिड्ढ' इत्यादिना ङीष् । कथा चरित्रं येन कृता तस्मै वाल्मीकयेनमः । अत्रप्रौढि र्नामालङ्कारः । तदुक्तं 'प्रौढिर्विशेषणयोगाद्विशेष्यप्रतिपत्तिः' इति । अर्थयोर्व्यत्यासपाठे गर्भितदोषशंका नस्यात् अत्र विरोधाभासालङ्कारश्च 'आभासत्वे विरोधस्य विरोधाभासइष्यते' इति ॥

व्यासः क्षमाभृतां श्रेष्ठो वन्द्यः स हिमवानिव ।
सृष्टा गौरीदृशी येन भवे विस्तारिभारता ॥ १२ ॥
कर्णान्तविभ्रमभ्रान्तकृष्णार्जुनविलोचना ।
करोति कस्य नाह्लादं कथा कान्तेव भारती ॥ १३ ॥
शश्वद्बाणाद्वितीयेन नमदाकारधारिणा ।
धनुषेव गुणाढ्येन निःशेषोरञ्जितो जनः ॥ १४ ॥
इत्थं काव्यकथाकथानकरसैरेषां कवीनाममी
विद्वांसः परिपूर्णकर्णहृदयाः कुम्भाः पयोभिर्यथा ।

१२. **व्यासइति**। येन व्यासेन ईदृशी सर्वत्रविख्याता विस्तरणशीलं विस्तारि भारतंयस्यांसा गौः वाक् 'स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले । लक्ष्यदृष्ट्योः स्त्रियांपुंसिगौः' इत्यमरः भवे संसारे सृष्टा कृता सः क्षमाभृतां क्षान्तानां मध्ये श्रेष्ठः अतिशयेन प्रशस्यः व्यासः कृष्णद्वैपायनः येन हिमवता ईदृशी विख्याता भवे शिवे रतासक्ता विस्तारिणी भा कान्तिर्यस्यास्तथोक्ता गौरी पार्वती सृष्टा उत्पादिता स क्षमाभृतां पर्वतानाम्मध्ये श्रेष्ठः हिमवानिव वन्द्यः नमस्कार्यः अत्रश्लेषः उपमाच ॥

१३. **कर्णेति**। कर्णस्य राधेयस्य अन्ते नाशेसति विभ्रमेण (कृष्णपक्षे) वेगरुडस्य भ्रमेण चलनेन (अर्जुनपक्षे) विस्मयेन (धृतराष्ट्रपक्षे) विशेषभ्रान्त्या भ्रान्ताः चरितुंप्रवृत्ताः कृष्णः वासुदेवः अर्जुनः पार्थः विलोचनः नेत्ररहितः धृतराष्ट्रः यस्यान्तथोक्ता भरतान् लक्षणयाभरतवंश्यान्नृपानधिकृत्यकृता भारती कथा 'अधिकृत्यकृतेग्रन्थे' इत्यण् । कर्णयोः श्रोत्रयोः अन्ते प्रान्ते विभ्रमेण विलासेन भ्रान्ते स्फुरिते कृष्णार्जुने श्यामधवले विलोचने नेत्रेयस्यास्तथोक्ता कान्तेव युवतिरिव कस्य आह्लादं सन्तोषं न करोति । अलंकृतिः पूर्ववत् ॥

१४. **शश्वदिति**। शश्वत् सदा बाणः कादंबरीकथाकर्ताबाणकविः शरश्च द्वितीयः सहायः यस्यतथोक्तेन न मदाकारं स्तब्धत्वादिरूपं धरतीत्येवं शीलेन बाणाकर्षणाय नमन्तं आकारं धरतीत्येवंशीलेनच गुणाढ्येन सातवाहनसभापण्डितेन बृहत्कथाकारेण तन्नाम्ना कविना गुणेन ज्यया आढ्येन युक्तेनच धनुषेव चापेनेव निःशेषः जनः रञ्जितः सन्तोषं प्रापितः अरं अत्यर्थं जितश्च । पूर्ववदलंकारः ॥

१५. **कविवर्णनं संक्षिपन्नाह** । इत्थमिति । इत्थं एवंप्रकारेण एषां वाल्मीकिप्रभृतीनां कवीनां काव्यस्य ध्वनि गुणीभूतव्यंग्य चित्र रूपस्य त्रिविधकाव्यस्य कथायाः प्रबन्धकल्पनायाः कथानकस्य गद्यकाव्यविशेषस्यच रसैः शृंगारादिभिरेव

वाचो वाच्यविवेकविक्लवधियामीदृग्विधा मादृशां
लप्स्यन्ते क्व किलावकाशमथवा सर्वसहाः सूरयः ॥ १५ ॥
वाचः काठिन्यमायान्ति भङ्गश्लेषविशेषतः ।
नोद्वेगस्तत्र कर्तव्यो यस्मान्नैको रसः कवेः ॥ १६ ॥
काव्यस्याम्रफलस्येव कोमलस्येतरस्य च ।
बन्धच्छायाविशेषेण रसोऽप्यन्यादृशो भवेत् ॥ १७ ॥

रसैः अमृतैः अमी इदानीन्तना भविष्यन्तश्च विद्वांसः पयोभिः क्षीरैर्जलैर्वा कुंभाः घटाः यथा तथा परिपूर्णानि कर्णाः श्रोत्राणि हृदयानि मनांसिच कुंभपक्षे लक्षणया कर्णाः उपरिभागाः हृदयानि मध्यभागाश्च येषान्तथोक्ताः सन्ति भविष्यन्तिच। एवञ्चसति। वाच्यस्य अभिधेयार्थस्य (किमुतलक्ष्यार्थव्यङ्ग्यार्थयोः) विवेके विवेचने अवबोधे इति यावत् विक्लबा अशक्ता धीः बुद्धिर्येषान्तथोक्तानां मादृशां मद्विधानां ईदृशी विधा येषान्ते ईदृग्विधाः रसरहिताः वाच उक्तयः क्व कुत्र अवकाशं स्थानं लप्स्यन्ते प्राप्स्यन्ति इति किल सभाव्येरम् ( किलेतिसंभावनायां ) तर्हि ग्रन्थरचना-प्रयासः किमित्याह अथेति अथवा यद्वा सूरयः विद्वांसः सर्वं सहन्त इति सर्वंसहाः 'पूस्सर्वयोर्दारिसहोः' इति खच्। अरसमपि ग्रन्थं दयया परिगृह्य व्याख्याप्राग-ल्भ्येन रसवन्तमारचयंतीति भावः। शार्दूलविक्रीडितवृत्तं 'सूर्याश्वैर्मसजस्तताः सगुरवश्शार्दूलविक्रीडितम्' इति। उपालंकारः ॥

१६. भगश्लेषमुक्तिविशेषेण संवृण्वन्नाह वाचइति याः वाचः भंगश्लेषस्य पदभङ्गाधीनार्थद्वययुक्तश्लेषालङ्कारस्य ( यथा 'सावैरात्रिजातस्य' इत्यत्र सा वै रात्रिजातस्य सा अवैरा त्रिजातस्य इति पदभङ्गः ) दुर्बोधार्थकत्वं आयान्ति गच्छन्ति तत्र वाक्षु उद्वेगः अरतिः न कर्तव्यः यस्मात् कारणात् कवेः प्रबन्धकर्तुः रसः रुचिः एकः न किन्त्वनेकः ( रुचिर्हि प्रसादलक्षणा व्युत्पत्तिलक्षणाचेति द्विविधा प्यस्ति ) अत्र वाक्यार्थहेतुकं काव्यलिङ्गं 'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमलंकृतिः' इति ॥

१७. ननु प्रसादमार्गेण कोमलमेव काव्यं विरच्यतां किमितरेण व्युत्पत्तिमार्गेण भंगश्लेषकृतकाठिन्येनोद्वेगहेतुनेत्यतआह। काव्यस्येति। कोमलस्य प्रसादमार्गेण स्फुटार्थस्य पूर्णपाकेन मृदोश्च इतरस्य व्युत्पत्तिमार्गेण कठिनार्थस्य अपूर्णपाकेन कठिनस्य च काव्यस्य आम्रफलस्येव चूतफलस्येव रसोपि शृङ्गारादिरवि रुचिश्चापि बन्धस्य रचनायाः वृन्तस्य च छायायाः विच्छित्तेः नीलपीतादिशोभायाश्च विशेषेण भेदेन अन्यादृशः अन्यरूपः भवेत् व्युत्पत्तिमार्गेणापिसोत्कर्षएवस्यादिति भावः। अत्र उपमा श्लेषश्चालङ्कारौ ॥

1. अस्ति समस्तमुनिमनुजवृन्दवृन्दारकवन्दनीयपादारविन्दस्य भगवतो विधेर्विश्वव्यापिव्यापारपारवश्यादवतीर्णस्य संसारचक्रे क्रतुक्रियाकाण्डशौण्डस्य शाण्डिल्यनाम्नो महर्षेर्वंशः ॥

2. श्रूयन्ते च यत्र श्रवणोचिताश्चन्दनपल्लवा इव केचिदनूचानाः शुचयः सत्यवाचो विरञ्चिवर्चसोऽर्चनीयाचारा ब्रह्मविदो ब्राह्मणाः । पुण्यजनाश्च न च येलङ्कापुरुषाः, ससूत्राश्च न च येलम्पटाः, प्रसिद्धाश्च न च येलम्पाकाः, कामवर्षाश्च न च येलङ्घनाः सन्मार्गस्य, नववयसोऽपि न च येलम्बालकाः, महाभारतिकाश्च न च येरङ्गोपजीविनः, सेविताप्सरसोऽपि न च येरम्भयान्विताः ॥

1. कविः स्ववंशानुकीर्तनपूर्वकं स्वानुद्धतत्वं प्रकटयन्नाह । **अस्तीत्यादिना ।** समस्तैः मुनिभिः सनकादिभिः मनुजबृन्दै. नरसमूहैः बृन्दारकैः देवैश्च यद्वा मुनिजनसमूहश्रेष्ठैः (प्रशस्तं बृन्दं येषां बृन्दारकाः 'शृङ्गबृन्दाभ्यामारकन्' इति आरकन्) वन्दनीये पादारविन्दे यस्य तथोक्तस्य (अत्रोपमा) भगः 'ऐश्वर्यस्य समग्रस्य वीर्यस्ययशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णांभगइतीरणा' इत्युक्ताष्षड्गुणास्तद्वतः भगवतः विश्वं लोकं व्याप्तुं शीलवतः व्यापारस्य सर्जनादिकार्यस्य पारवश्यात् 'ल्यब्लोपेपञ्चमी' पारतन्त्र्यंविहाय स्वातन्त्र्येणवर्तनायकिमु । संसारचक्रेचक्रवद्भ्रमियुक्ते अनादावितियावत् प्रपञ्चे अवतीर्णस्य कृतावतारस्य विधेः ब्राह्मणइवेत्युत्प्रेक्ष्यमाणस्य क्रतुक्रियाणां यज्ञकर्मणां काण्डे समूहे शौण्डस्य समर्थस्य शाण्डिलस्यापत्य शाण्डिल्यः तन्नाम्नः महर्षेः वंशः अन्वयः अस्ति ॥

2. **श्रूयन्त इति ।** यत्र महर्षेर्वंशे केचिद्ब्राह्मणा. चन्दनपल्लवा इव श्रवणे आकर्णने श्रवणयोः श्रोत्रयोः (अवतंसीकरणायच) उचिताः योग्याः । अत्रोपमा । अनूचानाः साङ्गवेदाध्यापकाः अन्ववोचदित्यनूचानः 'उपेयिवान्' इत्यादिनानीपातितः 'अनूचानो विनीते स्यात् साङ्गवेदविचक्षणे' इति विश्वः । शुचयः शुद्धाः सत्यवाचः अवितथवचनाः विरिञ्चे ब्रह्मणः वर्चः दीप्तिरिव वर्चः येषान्तथोक्ताः अर्चनीयः पूज्यः आचारः कर्मयेषान्तथोक्ताः ब्रह्म वेदं परमात्मानंवा विदन्ति जानन्तीति ब्रह्मविदश्च श्रूयन्ते । च किञ्च ये ब्राह्मणाः पुण्यजनाः राक्षसाः लङ्कापुरुषाः न इति विरोधे पुण्याः पवित्राः जनाः लोकाः अलं अत्यर्थं कापुरुषाः कुत्सितजनाः न इति परिहारः अत्र विरोधाभासालङ्कारः एवमुत्तरत्रापि । च ये ससूत्राः सूत्रेण तन्तुना सहिताअपि अलं अत्यन्तं पटः येषान्ते अलंपटाः न इति विरोधः । सूत्रेणोपवीतेन वेदपाठेनवा सहिताः लंपटाः कामिनः नेतिपरिहारः । ये प्रसिद्धाः प्रकर्षेण सिद्धाः अग्निसंस्कारेण निष्ठां

किं बहुना ।

जानन्ति हि गुणान्वक्तुं तद्विधा एव तादृशाम् ।
वेत्ति विश्वम्भरा भारं गिरीणां गरिमाश्रयम् ॥ १८ ॥

तेषां वंशे विशदयशसां श्रीधरस्यात्मजोऽभू-
द्देवादित्यः स्वमतिविकसद्वेदविद्याविवेकः ।
उत्कल्लोलां दिशि दिशि जनाः कीर्तिपीयूषसिन्धुं
यस्याद्यापि श्रवणपुटकैः कूणिताक्षाः पिबन्ति ॥ १९ ॥

प्राप्ता अपि (पूपाद्याः) ते कथमलं नपाकाः नपच्यन्तेस्म इति विरोधः प्रसिद्धाः विख्याताः लंपाकाः लंपटाः नेतिपरिहारः । ये कामवर्षाः अत्यन्तं वर्षिणोपि सन्मार्गस्य नक्षत्रमार्गस्य अलं अलङ्काराः घनाः मेघाः नेतिविरोधः कामवर्षाः अभिलषितदातारः सताम्मार्गस्य लङ्घन्तेअतिक्राम्यन्तीति लङ्घनाः नेतिपरिहारः । ये नववयसः नवं नूतनं प्रथमं अल्पमितियावत् वयः येषान्तथोक्ता अपि अलं वालकाः नेति विरोधः नववयसः तरुणावस्थाः लंवालकाः लंबमानकेशाः नेति परिहारः अग्निहोत्रित्वात् ह्रस्वकेशावा सर्वदाकर्मप्रवृत्तत्वाद्बद्धकेशावेति भावः । ये भरतेन नाट्याचार्येण प्रोक्तं भारतं गान्धर्वं भारतंशिल्पमेषामिति भारतिकाः नटाः 'शिल्पं' इतिठक् । महान्तः नटाअपि रंगे नाट्यशालायां उपजीविनः नेति विरोधः भरतानधिकृत्यकृतं भारतं भारताख्यानं भारतमधीयते विदन्तिवा भारतिकाः 'आख्यानाख्यायिकेतिहासपुराणेभ्यश्च' इति ठक् । महान्तः भारतविदः अरं अलं गां भूमिं पातिरक्षतीति गोपः नृपः गोपात्जीविनः नेतिपरिहारः 'राजान्नंतेज आदत्ते' इति दोषश्रवणात् राजप्रतिग्रहमपि नाचरन्तीति भावः । ये सेविताः भुक्ताः अप्सरसः देवांगनाः यैस्तथोक्ताअपि रम्भया तदाख्याप्सरसा आन्विताः युक्ताः नेति विरोधः सेवितानि अप्सरांसि जलप्रधानतटाकाः यैस्तथोक्ताः अरं अत्यर्थं भयान्विताःनेतिपरिहरः ॥

१८. किंबहुनेति । बहुनोक्तेन किं संक्षिप्य वदामीत्यर्थः । जानन्तीति त इव दृश्यन्त इति तादृशः तद्विधाः तेषां शाण्डिल्यवंश्यानां ब्राह्मणानां गुणान् वक्तुं तेषां विधेव विधा येषान्ते तद्विधाः तादृशा एव जानन्ति । गुरोर्भावः गरिमा महत्त्व 'पृथ्वादिभ्यः' इत्यनेन इमनच् । गरिमाणमाश्रयतीति तथोक्तस्तं गिरीणां पर्वतानां भार भरं विश्वं विभर्तीति विश्वंभरा भूमिः 'संज्ञायांभृतृ' इत्यादिनाखच् वेत्ति जानाति । अत्र विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥

१९. तेषामिति । विशदयशसां स्वच्छकीर्तीनां तेषां पूर्वोक्तानां वंशे अन्वये (जातस्य) श्रीधरस्य तदाख्यस्यविदुषः आत्मजः पुत्रः स्वस्य मतौ विकसन् भास

तैस्तैरात्मगुणैर्येन त्रिलोक्यास्तिलकायितम् ।
तस्मादस्मि सुतो जातो जाड्यपात्रं त्रिविक्रमः ॥ २० ॥
सोऽहं हंसायितुं मोहाद्बकः पङ्गुर्यथेच्छति ।
मन्दधीस्तद्वदिच्छामि कविबृन्दारकायितुम् ॥ २१ ॥
भङ्गश्लेषकथाबन्धं दुष्करं कुर्वता मया ।
दुर्गस्तरीतुमारब्धो बाहुभ्यामभ्यसां पतिः ॥ २२ ॥

मानः वेदविद्यानां वेदप्रमुखचतुर्दशविद्यानां । तदुक्तं 'अंगानिवेदाश्चत्वारोमीमांसा-न्यायविस्तरः । पुराणंधर्मशास्त्रञ्च विद्याह्येताश्चतुर्दश' इति । विवेकः विज्ञानं यस्यतथोक्तः देवादित्यः तन्नामा पण्डितः अभूत् आसीत् । अद्यापि जनाः दिशि-दिशि प्रतिदिशं उत्कल्लोलां अधिकतरंगां प्रवृद्धामित्यर्थः यस्य देवादित्यस्य कीर्ति-मेव पीयूषसिन्धुं अमृतसमुद्रं कूणिते सुखात्किञ्चिन्निमीलिते आक्षिणी येषान्ते कूणिता-क्षास्सन्तः 'बहुव्रीहौसक्थ्यक्ष्णोः' इत्यनेनषच् । श्रवणैः श्रोत्रैरेव पुटकैः पत्रपुटैः चषकैर्वा पिबन्ति । मन्दाक्रान्तावृत्तं 'मन्दाक्रान्ताजलधिषडगैः म्भौनतौतोगुरूचेत्' इति । श्लिष्टपरंपरितरूपकमलङ्कारः ॥

२०. **तैस्तैरिति** । येन देवादित्येन तैस्तैः अनितरसामान्यैः आत्मनः स्वस्य गुणैः अनूचानत्वादिभिः त्रयाणां लोकानां समाहारस्त्रिलोकीं 'संख्यापूर्वोद्विगुः' इति द्विगुत्वम् । 'द्विगुरेकवचनम्' इत्येकत्वम् 'द्विगोः' इति ङीप् । तस्याः तिलकवत् ललामवत् आचरितं तिलकायितम् । अत्रोपमा । तस्माद्देवादित्यात् सुतः पुत्रः जातः उत्पन्नः त्रिविक्रमः तदाख्यः अहं जाड्यस्य मूर्खत्वस्य पात्रं आस्पदं अस्मि ॥

२१. **सोहमिति** । यथा पङ्गुः दैवाद्भग्नजङ्घः स्वभावसुन्दरगतेर्हंसस्यापेक्षया पङ्गुसदृशोवा बकः कङ्कः मोहादज्ञानात् हंसायितुं हंसवदाचरितु इच्छति तद्वत् तेनतुल्यं तथेतियावत् मन्दधीः अल्पमतिः सोह कविबृन्दारकः कविश्रेष्ठ इवाचरितु कविबृन्दारकायितुं इच्छामि । हंसायितुमित्यादौ अचारक्यङन्तात्तुमुन् । पूर्व-वदलङ्कारः ॥

२२. **भङ्गेति** । दुष्करं कृच्छ्रेणकर्तुं शक्यं 'ईषत् दुःसु' इत्यादिना खल् । भङ्गश्लेषप्रचुरायाः ( भङ्गश्लेषलक्षणं उक्त प्राक् ) कथायाः प्रबन्धकल्पनायाः 'ज्ञात-सत्यार्था आख्यायिका किञ्चित्सत्यार्थाकथा' इति विवेकः बन्ध रचनां कुर्वता तन्वता मया दुर्गः गन्तुं तरीतुमशक्यः अम्भसां पतिः समुद्रः बाहुभ्यां भुजाभ्यां तरीतुं तरितुं 'वृतोवा' इति दीर्घविकल्पः । आरब्धः प्रक्रान्तः । अत्र यथा बाहुभ्यां दुस्तरस्समुद्रस्तथा भङ्गश्लेषकथाबन्धोपि दुष्कर इत्यौपम्याद्वस्तुसम्बन्धः । 'अभव न्वस्तुसम्बन्ध उपमापरिकल्पकः' इति ॥

उत्फुल्लगल्लैरालापाः क्रियन्ते दुर्मुखैः सुखम् ।
जानाति हि पुनः सम्यक्कविरेव कवेः श्रमम् ॥ २३ ॥

संगता सुरसार्थेन रम्या मेरुचिराश्रया ।
नन्दनोद्यानमालेव स्वस्थैरालोक्यतां कथा ॥ २४ ॥

उदात्तनायकोपेता गुणवद्वृत्तमुक्तका ।
चम्पूश्च हारयष्टिश्च केन न क्रियते हृदि ॥ २५ ॥

२३. **उत्फुल्लेति** । उत्फुल्लगल्लैः विकसितगण्डैः दुर्मुखैः दुर्वचनपरैर्दुष्टैः आलापाः निन्दावाचः सुखं स्वैरं यथा तथा क्रियन्ते कवेः कवयितुः श्रमंपुनः काव्यकरण परिश्रमन्तु कविरेव सम्यक् जानाति हि प्रसिद्धौ नान्येदुर्मुखा इति भावः । गल्लशब्दः ग्राम्योऽपि अत्र दुर्मुखनिन्दायां प्रयुक्तत्वात् समुचित एव । उत्फुल्लगण्डैरितितुनिर्दुष्टः ॥

२४. **संगतेति** । सुरसार्थेन शोभनोरसः शृंगारादिर्यत्रतथोक्तेन अर्थेन अभिधेयेन सुराणां देवानां सार्थेन सघेनच संगता युक्ता रम्या मनोज्ञा रुचिरः रम्यः आश्रयः नलोपाख्यानलक्षणो यस्यास्तथोक्ता अन्यत्र मेरुः सुराद्रिः चिरमाश्रयो यस्यास्तथोक्ता मे मत्कर्तृका कथा प्रबन्धकल्पना यद्वा दमयन्तीकथा कथालक्षणन्तु 'कथायां सरसं वस्तु गद्यैरेव विनिर्मितं । क्वचिदत्रभवेदार्या क्वचिद्वक्त्रापवक्त्रके ।' इति । ' तत् कथाख्यायिकेत्येकाजातिः सञ्ज्ञाद्वयाङ्किता' इत्याचार्यादण्डिकथितरीत्या कथाख्यायिकयोरैक्येन किञ्चित् कथालक्षणमाख्यायिकायां आख्यायिकालक्षणञ्च कथाया मुपयोक्तुं शक्यते आख्यायिकालक्षणन्तु—'आख्यायिका कथावत्स्या त्कवे र्वंशादिकीर्तन । अस्यामन्यकवीनाञ्च वृत्तंगद्यं क्वचित्क्वचित् । कथांशानां व्यवच्छेद आश्वास इंति बध्यते ।' इति । नन्दनोद्यानस्य तदाख्यस्येन्द्रारामस्य मालेवपङ्क्तिरिव स्वस्थैः अव्यग्रैः स्वर्गवासिभिश्च 'खर्परेशरिवा विसर्गलोपः' इत्यनेन स्वः इत्यत्र विसर्गलोपः आलोक्यतां विमृश्यतामीक्ष्यताञ्च अलोपमालङ्कारः ॥

२५. **उदात्तेति** । उदात्तेन महात्मना महार्घेणच नायकेन नेत्रा नलेन हारमध्यरत्नेनच उपेता युक्ता गुणवत् ओजःप्रसादादिगुणयुक्तं वृत्त छन्दोबद्धं आर्यावृत्तादिकं मुक्तकञ्च गद्यविशेषश्च यस्यान्तथोक्ता । मुक्तकलक्षणन्तु—'मुक्तकं वृत्तगन्धिच' इति यथा 'कल्लोलास्फालितान्तस्तटभुवि पारावारस्य' इत्यादिक । अन्यत्र गुणवन्तः तन्तुमत्यः वृत्ताः वर्तुलाश्च मुक्ताः मौक्तिकानि यस्यां तथोक्ता चम्पूः गद्यपद्यमयी सांकोच्छ्वासा कथाच हृदि चित्ते केन नक्रियते हारयष्टिः मुक्ताहारलताच हृदि वक्षसि केन नक्रियते । तुल्ययोगितालङ्कार ॥

३. अस्ति समस्तविश्वम्भराभोगभास्वल्ललामलीलायमानः, समानः सुमनस्सेव्यतया नाकलोकस्य, ग्राम्यकविकथाबन्ध इव नीरसस्यमनोहरः, भीम इव भारतालङ्कारभूतः, कान्ताकुचमण्डलस्पर्श इवाग्रणीः सर्वविषयाणाम्, अनधीतव्याकरण इवादृष्टप्रकृतिनिपातोपसर्गलोपवर्णविकारः, पशुपतिजटाबन्ध इव विकासितकनककमलकुवलयोच्चलितरजःपुञ्जपिञ्जरितहंसावतंसया प्रचुरचलच्चकोरचक्रवाककारण्डवमण्डलीमण्डिततीरया भगीरथभूपालकीर्तिपताकया स्वर्गगमनसोपानवीथीयमानरिङ्गत्तरङ्गया गङ्गया पुण्यसलिलैः प्लावितश्चन्द्रभागालंकृतैकदेशश्च, सारः सकलसंसारचक्रस्य, शरण्यः पुण्यकारिणाम्, आरामो रामणीयककदलीवनस्य, धाम धर्मस्य, आस्पदं सम्पदाम्, आश्रयः श्रेयसाम्, आकरः साधुव्यवहाररत्नानाम्, आचार्यभवनमार्यमर्यादोपदेशानामार्यावर्तो नाम देशः ॥

३. कथाख्यायिकयोरैक्यमाचक्षाणस्याचार्यदण्डिनोमतमवलम्ब्याख्यायिकावदलापिकिञ्चित्कविवंशादिकमुक्त्वाकथामारभते **अस्तीत्यादिना** । **समस्तेति** समस्ताः याः सर्वस्या. विश्वभरायाः भूमेः आभोगः आयामस्तस्यवा तद्युक्तंवा भास्वत् प्रकाशमानञ्च यल्ललामतिलकं तस्यलीला विलासइवाचरन् । **समानइति** । सुमनोभिः देवैः विद्वद्भिश्च सेव्यतया आश्रयणीयतया नाकलोकस्य स्वर्गस्य समानः सदृशः । **ग्राम्येति** । ग्रामेभवः ग्राम्यः ग्रामीणः पामरव्यवहारमात्रप्रसिद्धः 'ग्रामाद्यखञौ' इति यः तादृशस्य ग्राम्यदोषग्रस्तपदप्रयोगप्रधानस्यवा कवेः कथायाः बन्धः रचनेव । नीरेण जलेन सस्येनच अन्यत्र नीरसस्य अरसिकस्य मनोहरः रम्यः । **भीमइति** । भीमसेनइव भारतस्य भारतवर्षस्य भारताख्यस्येतिहासस्यच मण्डनभूतः । **कान्तेति** । वनिताकुचतटस्पर्श इव विषयाणां देशानां इन्द्रियार्थानाञ्च अग्रणीः प्रमुखः । **अनधीतेति** । अपठितव्याकरणशास्त्रइव न दृष्टः प्रकृतीनां प्रजानां निपातः स्वपदात्पतनं उपसर्गः धनापहारादिरुपद्रवः लोपः देवदायब्रह्मदायाद्यपालनं वर्णविकारः चातुर्वर्ण्याव्यवस्था च यस्मिन् पक्षे अदृष्टाः अज्ञाताः प्रकृतयः धात्वादयः निपाताश्चादय उपसर्गाः प्रादयः । लोपः प्रसक्तस्यादर्शनं । वर्णविकारः अक्षरविकृतिश्चयेनतथोक्तः । **पशुपतीति** । पशुपतेःशिवस्यजटाबन्धः जटाजूट इव विकसितेभ्यः फुल्लेभ्यः कनककमलेभ्यः स्वर्णारविन्देभ्यः कुवलयेभ्यः इन्दीवरेभ्यश्च उच्चलितानां उद्गतानां रजसां परागाणां पुञ्जेन समूहेन पिञ्जरवत्

4. यस्मिन्ननवरतधर्मकर्मोपदेशशान्तसमस्तव्याधिव्यतिकराः पुरुषायुष जीविन्यः सकलसंसारसुखभाजः प्रजाः । तथाहि । कुष्ठयोगोगान्धिक

पीतवर्णवत् कृताः पिञ्जरिताः हंसाः श्वेतगरुतएव अवतंसः भूषणं यस्यास्तथोक्तया-**प्रचुरेति** । प्रचुराः अधिकाः चलन्तः सरन्त ये चकोराः चन्द्रिकाप्रियाः चक्रवाकाः कोकाः कारण्डवाः महापक्षाः जलकाकावा तेषां मण्डल्या समूहेन मण्डिते भूषिते तीरे रोधसीयस्यास्तथोक्तया । **भगीति** । भगीरथनृपयशोवैजयन्त्या 'पताकावैजयन्तीस्यात्केतनं ध्वजमस्त्रियाम्' इत्यमरः । **स्वर्गेति** । स्वर्गः गम्यते एभिरिति स्वर्गगमनानि यानि सोपानानि आरोहणानि 'आरोहणंस्यात्सोपानं' इत्यमरः तेषां वीथीवत् पङ्क्तिवदाचरन्तीति वीथीयमानाः रिंगन्तः विलसन्तः तरंगाः ऊर्मय यस्यास्तथोक्तया गङ्गया जाह्नव्या (कर्त्र्या) पुण्यसलिलैः परिशुद्धजलैः (करणैः) प्लावितः सिक्तः शिवस्यगङ्गाधरत्वात् देशस्य गङ्गाविशिष्टोत्तरत्वाच्चेति भावः । चन्द्रभागया तदाख्यनद्या चन्द्रस्य भागेन खण्डेनच अलंकृतः भूषितः एकदेशः दाक्षिगरूपएकभागः शिरोदेशश्च यस्यतथोक्तः । सकलस्य ससारचक्रस्य प्रपञ्चसमूहस्य सारः वरः 'सारोबलेस्थिरांशेच न्याय्ये क्लीववरेत्रिषु' इत्यमरः । पुण्यकारिणां सुकृतं ताच्छील्येनकुर्वतां शरण्यः शरणे रक्षणे साधुः । रमणीयस्यभावः रामणीयकं सुन्दरत्वं 'द्वन्द्वमनोज्ञादिभ्यश्च' इति वुञ् । तदेव कदलीवनं रंभारण्यं तस्य आरामः उपवनम् ॥ अत्र रूपकालङ्कारः ॥ धर्मस्य पुण्यस्य आचारस्यवा 'धर्मो स्त्री पुण्य आचारे स्वभावोपमयोः क्रतौ । अहिंसोपनिषन्न्यायेनाधनुर्यमसोपमे' इति मेदिनी ॥ धाम स्थानं । सम्पदां सम्पत्तीनां आस्पदं पदं स्थानमित्यर्थः आपद्यतेस्मिन्नित्यास्पदम् 'आस्पदं प्रतिष्ठायाम्' इत्यनेननिपातित ॥ श्रेयसां मङ्गलानां आश्रयः आधारः साधूनां सतां यद्वा साधवः सन्तः व्यवहाराः स्थितयः आचारा इति यावत् । 'विनानार्थेऽव सन्देहे हरणं हार इष्यते । नानासन्देहहरणाद्व्यवहार इतिस्मृतः' इति कात्यायनः ॥ तएव रत्नानि मणयः तेषां आकरः खनिः । आर्याणां पूज्यानां मर्यादानां न्याय्यपथस्थितीनां उपदेशानांशिक्षणानां आचर्यतेनेनेत्याचार्यः 'उपनीयतु यः शिष्यं वेदमध्यापयेद्द्विजः । सांगञ्च सरहस्यञ्च तमाचार्यंप्रचक्षते' इत्युक्तलक्षणः तस्य भवनं गृहम् । 'आसमुद्रात्तुवैपूर्वा दासमुद्राच्च पश्चिमात् । तयोरेवान्तरंगिर्योः (विन्ध्यहिमवतोः) आर्यावर्तंविदुर्बुधाः' इतिमनूक्तलक्षण आर्यावर्तोनाम प्रसिद्धोदेशोऽस्ति॥

4. **यस्मिन्निति** । यस्मिन्नार्यावर्ते प्रजाः जनाः अनवरतं सदा धर्मकर्मभिः पुण्यक्रियाभिः उपदेशेन मन्त्रकथनेनच शान्ताः ध्वस्ताः समस्तानां व्याधीनां व्यतिकराः सम्बन्धाः यासान्तथोक्ताः । पुरुषस्यायुः पुरुषायुषं शतसंख्यापरिमितंवर्षः 'अचतुर' इत्यादिना निपातितं तावत्पर्यन्तजीवनशीलाः सकलानि संसारसुखानि प्रापञ्चिकसौख्यानि भजन्तीति तथोक्ताश्चसन्ति ॥ तदेवोपपादयति **तथाहीत्या-**

पणेषु, स्फोटप्रवादो वैयाकरणेषु, संनिपातस्तालेषु, ग्रहसंक्रान्तिर्ज्योतिःशास्त्रेषु, भूतविकारवादः सांख्येषु, क्षयस्तिथिषु, गुल्मवृद्धिर्वनभूमिषु, गलग्रहा मत्स्येषु, गण्डकोत्थानं पर्वतवनभूमिषु, शूलसम्बन्धश्चण्डिकायतनेषु, दृश्यते न प्रजासु ॥

दिना । कुष्ठस्य तदाख्यस्यौषधस्य योगः सम्बन्धः । गन्धः पण्यं एषामिति गान्धिकाः गन्धवणिजः 'तदस्यपण्यं' इति ठक् ॥ तेषां आपणेषु निषद्यासु । दृश्यते कुष्ठस्य तदाख्यरोगस्य योगः सम्बन्धः प्रजासु नदृश्यते । अत्र परिसंख्यालङ्कारः 'परिसंख्यानिषिध्यैकमेकस्मिन्वस्तुयन्त्रणम्' इति ॥ एवमुत्तरत्रापि । स्फुट्यते व्यज्यतेऽर्थोनेनेति स्फोटः वैयाकरणप्रसिद्धशब्दब्रह्म सच वाक्यस्फोटः पदस्फोटश्चेति द्विधा नित्यश्च तस्य स्फोटस्य पिटकस्यच प्रकर्षेण वादः कथन । व्याकरणमधीयते विदन्तिवा वैयाकरणास्तेषु । सन्निपातः उभयहस्तयोजनं । यदुक्तम् 'शस्यांदक्षिणहस्तेनतालंवामेनयैाजयेत् । उभयोर्हस्तयोःपातः सन्निपात स उच्यते' इति ॥ वातपित्तश्लेष्मणामेकत्रयोगो रोगविशेषश्च । तालेषु करास्फालेषु । 'तालःकरतलोङ्गुष्ठमध्यमाभ्याञ्चसम्मिते । गीतकालक्रियामाने करास्फालेद्रुमान्तरे । वाद्यभाण्डेचकांस्यस्य त्सरौतालीजटौषधौ । क्लीवन्तुहरितालेस्यात्' इति विश्वः ॥ ग्रहाणां सूर्यादीनां संक्रान्तिः मेषादिराशिषुप्रवेशः ग्रहाणां पूतनादिग्रहाणां संक्रान्तिःसम्बन्धः । ज्योतिषां सूर्यादीनां (स्वरूपादिबोधकेषु) शास्त्रेषु । भूतः प्रधानाख्य तत्त्वं मूलप्रकृतिः । ततो महान् । महतस्तस्मादहङ्कारः । अहङ्काराच्च पञ्चतन्मात्राणि (पृथिव्यादिपञ्चतन्मात्राणि) । एवमष्टौ । तत एकादशेन्द्रियाणि पञ्चभूतानि चेति षोडशविकाराः । एवं चतुर्विंशतितत्त्वानि । पञ्चविंशस्तु पुरुषः । तथा च—'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः' इति सांख्याः । ततश्च तेष्वेव भूतविकाराणां वादः प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहः । पक्षे भूतानां प्राणिनां भूतैर्देवयोनिविशेषैर्वा विकारः शरीरादिविकृतिः तस्य वादः कथनम् । संख्यां तत्वानां पञ्चविंशतिं अधिकृत्यकृतं सांख्यंकापिलं तदेषामस्तीतिसांख्याः कापिलास्तेषु । क्षयः अपचयः यक्ष्माच । 'क्षयोगेहेकल्पान्तेऽपचयेरुजि' इति हैमः । तिथिषु प्रथमादिषु । **गुल्माः** । निकुञ्जाः रोगभेदाश्च । **गलग्रहाः** । कण्ठे ग्रहाः बडिशेन ग्रहणानि रोगभेदाश्च । **गण्डकोत्थानम्** । गण्डकानां खड्गिपशूनां ह्रस्वस्फोटकानाञ्च उत्थानं उत्पत्तिः । **शूलं** । आयुधं रोगश्च । **चण्डिकायतनेषु** । दुर्गायाः आलयेषु ॥

5. यत्र चतुरगोपशोभिताः सङ्गमा इव ग्रामाः, तुङ्गसकलभवनाः सर्वत्र नगा इव नगरप्रदेशाः, सदाचरणमण्डनानि नूपुराणीव पुराणि, सदानभोगाः प्रभञ्जना इव जनाः, प्रियालपनसाराणि यौवनानीव वनानि, विटपिहिताश्चेटिका इव वाटिकाः, निर्वृतिस्थानानि सुकलत्राणीवेक्षुक्षेत्रसत्राणि, जलाविलक्षणाः पशुपुरुषा इवाप्रमाणास्तटाकभागाः,

5. **यत्रेति** । यत्र देशे ग्रामाः संग्रामाः रणभूमय इव चतुरैः पाशुपाल्यदक्षैः गोपैः गोपालैः उपशोभिताः भूषिताः संग्रामपक्षे यत्र च इतिच्छेदः । तुरगैरश्वैः उपशोभिताः सन्ति ॥ अत्रश्लेषोत्थापिता उपमा एवमुत्तरत्रापि ॥ **तुङ्गेति** । तुङ्गान्युन्नतानि सकलानि समस्तानि भवनानि गृहाणि येषु ते । नगाः पर्वतास्तु तुङ्गं श्रेष्ठं यद्वा तुङ्गैः पुन्नागैरुपलक्षितं कलभैः इभडिंभैस्सहितञ्च वनं येषु तथोक्ताः 'तुङ्गः पुन्नागनागयोः । तुङ्गःस्यादुन्नतेन्यवत्' इति विश्वः । **सदेति** । पुराणि सत् शोभनं आचरणं आचारएव मण्डनं भूषणं येषान्तानि । नूपुराणि मञ्जीराणितु सदा चरणानां पादानां मण्डनानि । **सदानेति** । जनाः दानभोगाभ्यां सहिताः । प्रभञ्जनाः वातास्तु सदा नभस्याकाशे गच्छन्तीति नभोगाः । **प्रियेति** । वनानि प्रियालं राजादनवृक्षं पनसं कण्टकिफलवृक्षञ्च इयूति प्राप्नुवन्तीति तथोक्तानि । यौवनानितु प्रियाणां दयितानां आलपनेन सकामभाषणेन साराणि वराणि । **विटेति** । वाटिकाः गृहोद्यानानि वृतयोवा विटपिभ्यः वृक्षेभ्यः हिताः अनुकूलाः । चेटिकाः सन्धानकुशलाः दूत्यस्तु विटैः षिङ्गैः पिहिताः वेष्टिताः । **निर्वृतीति** । इक्षूणां पुण्ड्रेक्षूणां क्षेत्राणां केदाराणां सत्राणि वनानि 'सत्रमाच्छादने यज्ञे सदादाने वनेऽपिच' इत्यमरः । निर्वृत्या वृतेरभावेन स्थानं स्थितिः येषान्तानि । सुकळत्राणि समीचिनाः भार्यास्तु निर्वृतेस्सुखस्य स्थानान्यास्पदानि । **जलेति** । तटाकभागाः सरःप्रदेशाः जलाविलाः (जलार्थिभि सदासेव्यतया) जलपिच्छिलाः क्षणाः अवतारादितीरदेशा येषु । अप्रमाणाः अगाधाः । पशुपुरुषाः पशुप्रायाः नरास्तु (लडयोरभेदात्) जलाः जडाः विलक्षणाः व्यपेतशास्त्राः अप्रमाणाः प्रत्यक्षादिप्रमाणरहिताश्च । **कुपितेति** । कूपाः प्रहयः भग्नाः स्फुटिताः कुम्भानां घटानां कर्णाः कण्ठायेषुतथोक्ताः घनाः प्रचुराः स्वाः स्वकीयाः पातालमूलोत्थाः नतुप्रवाहादिपूरिताः आपःतीर्थानि येषु तथोक्ताश्च । कुपितानां कपीनां कुलैस्संधैः आकुलिताः पीडिताः लंकेश्वरस्य रावणस्य किंकरास्तु भग्न (श्रीरामागमनकथनेन) विच्छिन्नः कुम्भकर्णस्य तदाख्यरक्षसः घनः अधिकः (षण्मासावधिकः) स्वापः निद्रा यैस्तथोक्ताः कूपपक्षे स्वापा इत्यत्र 'ऋक्पू' इत्यादिना समासान्तप्रत्ययः । **पीवेति** । गावः धेनवः पीवरंच तदूधश्च तस्माद्धेतोः सरित इव अथवा पीवरं पीनं ऊधः आपीनं येषां अत्र 'गोशब्दो धे-

कुपितकपिकुलाकुलिता लङ्केश्वरकिंकरा इव भग्नकुम्भकर्णघनस्वापाः कूपाः, पीवरोधसः सरित इव गावः, सतीव्रतापदोषाः सूर्यद्युतय इव कुलस्त्रियः॥
6. यत्र च मनोहारिसारसद्वन्द्वास्तत्पुरुषेण द्विगुना चाधिष्ठिताः कादम्बरीगद्यबन्धा इव दृश्यमानबहुव्रीहयः केदाराः ॥

किं बहुना ।

नास्ति सा नगरी यत्र न वापी न पयोधरा ।
दृश्यते न च यत्र स्त्री नवापीनपयोधरा ॥ २६ ॥

न्वर्थोऽपि स्त्रीनरलिङ्गः' इति व्याडिः । ततःपुंस्त्वादनङ्न । सरितस्तु पीव स्थूल रोधः तटंयासांताः पीवरोधसः । **सतीति** । कुलस्त्रियः सत्कुलजाङ्गनाः सतीनां साध्वीनां व्रतेन पतिशुश्रूषणादिना अपदोषाः निष्कलंकाः सूर्यस्य द्युतयः प्रकाशास्तु तीव्रः तापएव दोषस्तेन सहिताः ॥

6. **यत्रेति**। यत्रदेशे केदाराः सस्यक्षेत्राणि मनोहारीणि सारसानां पक्षिविशेषाणां द्वन्द्वानि मिथुनानि येषु तथोक्ताः । तत्पुरुषेण तत्स्वामिना द्विगुना गोयुगयुक्तेन अधिष्ठिताः युक्ताः दृश्यमानाः बहवः व्रीहयः धान्यानि येषु तथोक्ताश्च । कादंबरीग्रन्थगतगद्यानां बन्धाः रचनास्तु मनोहारिणः साराः श्रेष्ठाः सद्वन्द्वाः द्वन्द्वसमासयुक्ताः तत्पुरुष द्विगुबहुव्रीहिसमासयुक्ताश्च ॥

२६. **नास्तीति** ॥ यत्र देशे सा कापि नगरी नास्ति यत्र नगर्यां वापी निपानं इनः स्वामी पयः जलं तयोर्धरा इनपयोधरा स्वामियुक्ता जलयुक्ताच न यत्रच नगर्यां नवा तरुणी स्त्री पीनौ पीवरौ पयोधरौ कुचौ यस्यास्सा पीनपयोधरा नदृश्यते । यद्वा यत्र नगर्यां वापी नवं नूततं आसमन्तात् पीनं आपीनं वृद्धं यत् पयः जलं तस्य धरा नदृस्यते । यत्र नगर्यां पयोधरा जलप्रधाना भूमिः नवाः नूतनाः आपीनाः पीवराः पयोधराः मेघाः यस्यान्तथोक्ता अथवा नवं स्तुतिं ताच्छील्येनाप्नोतीति नवापी नवापी चासौ इनः (राजा) च नवापीनः तं पान्तीति नवापानपाः तादृशाः येयोधाः तान् रातिगृह्णातीति तथाभूता अथवा नवाः नूतनाः अपां समूहः आपं तदेषामस्तीति आपिनः तेषां इनाः प्रभवः आपीनाः तादृशाः पयोधराः मेघाः यस्यान्तथाभूता नदृश्यते यद्वा पयोधरा पयसः क्षीरस्य धरा गौः नवं तरुणं आपीनं ऊधः तत्र पयसः क्षीरस्य धरा नदृश्यते यत्र नगर्यां नवा स्त्री पीनपयोधरा पीनस्तनी नदृश्यते । अत्र द्वितीयतुरीयपादावृत्तिरूपं यमकं शब्दालंकारः । 'यमकलक्षणन्तु' 'व्यावृत्तिर्वर्णसंहतेः यमकं' इति काव्यादर्शे । अर्थालंकारस्तु तुल्ययोगिता तल्लक्षणमुक्तं प्राक् ॥

अपि च ।

भवन्ति फाल्गुने मासि वृक्षशाखा विपल्लवाः ।
जायन्ते न तु लोकस्य कदापि च विपल्लवाः ॥ २७ ॥

७. यत्र सौराज्यरञ्जितमनसः सकलसमृद्धिवर्धितमहोत्सवपरम्परारम्भनिर्भराः, सततमकुलीनं कुलीनाः, प्राप्तविमानमप्राप्तविमानभङ्गाः, कतिपयवसुविराजितमनेकवसवः, समुपहसन्ति स्वर्गवासिनं जनं जनाः ॥

८. कथं चासौ स्वर्गान्न विशिष्यते ॥

९. यत्र गृहे गृहे गौर्यः स्त्रियः, महेश्वरो लोकः, सश्रीका हरयः, पदे पदे धनदाः सन्ति लोकपालाः । केवलं न सुराधिपो राजा । न च विनायकः कश्चित् ॥

२७. **भवन्तीति** ॥ फल्गुनीभिर्युक्ता पौर्णमासी फाल्गुनी सास्मिन्नस्तीति फाल्गुनः तस्मिन् मासि तपस्यमासे वृक्षशाखाः विपल्लवाः विगतकिसलयाः भवन्ति लोकस्यतुकदापि विपदां आपदां लवाः लेशाअपि नजायन्ते । अत्रपरिसंख्यालंकारः ॥

4. **यत्रेति** ॥ यत्रदेशे शोभनः राजा सुराजा सुराज्ञः भावस्सौराज्यं तेन रञ्जितं प्रीणितं मनः येषान्तथोक्ताः सकलानां समस्तवस्तूनां समृद्धया संपत्य वर्धितानां महोत्सवपरपराणां आरंभेण निर्भरा. निबिडाः जनाः कुलीनाः अभिजाता कौ भूमौ लीनाश्च सन्तः सततं सदा अकुलीनं न कौ भूमौ लीनं अनभिजातश्च अप्राप्तः विमानः तिरस्कारः व्योमयानश्च यैस्तथोक्तास्सन्तः प्राप्तः विमानः व्योमयानं तिरस्कारश्च येनतथोक्तं अनेकानि वसूनि धनानि अनेके वसवः वसुसंज्ञादेवाश्च येषान्तथोक्तास्सन्तः कतिपयैः कतिभिः ( अष्टभिः ) वसुभिः देवैः धनैश्च राजितं शोभितं । स्वर्गवासिनं जनं देवं सम्यगुपहसन्ति परिहसान्ति देवन्यक्कारः तुल्यार्थे अतएवोपमा व्यतिरेकश्लेषसंवालिता व्यतिरेकलक्षणन्तु 'व्यतिरेकोविशेषश्चे दुपमानोपमेययोः' इति ॥

8. **कथमिति** ॥ **असौ** आर्यावर्तः । **न विशिष्यते** नोत्कृष्टः भवति ॥

9 **यत्रेति** ॥ यत्रदेशे गृहे गृहे स्त्रियः गौर्यः गौरवर्णाः उभयकुलशुद्धाचा उमाश्च स्वर्गेतु एकस्मिन् गृहे एका गौरी ( उमा ) लोकः जनः महान् ईश्वरः अतिसमृद्धः शिवश्च अत्रसर्वे महेश्वराः स्वर्गेत्वेकोमहेश्वरः ( शिवः ) श्रिया शोभया लक्ष्म्याच सहिताः हरयः अश्वाः विष्णवश्च स्वर्गेत्वेक एव सलक्ष्मीको विष्णुः पदे पदे प्रतिस्थानं लोकपालाः नृपाः दिक्पालाश्च धनदाः धनप्रदाः कुबेराश्च सन्ति ।

10. यत्र चलतासंबन्धः कलिकोपक्रमश्च पादपेषु दृश्यते न पुरुषेषु ॥

11. यत्र चमरकवार्ता परमहिमोपघातश्च तुहिनाचलस्थलीषु श्रूयते न प्रजासु ॥

12. यश्च नीतिमत्पुरुषाधिष्ठितोऽप्यनीतिः, सवटोऽप्यवटसंकुलः, कारूपयुतोऽप्यगतरूपशोभः ॥

13. यत्र च गुरुव्यतिक्रमं नक्षत्रराशयः, मात्राकलहं लेखशालिकाः, मित्रोदयद्वेषमुलूकाः , अपत्यत्यागं कोकिलाः, बन्धुजीवविघातं ग्रीष्मदिवसाः, कुर्वन्ति न जनाः ॥

धनदः (कुबेरः) एकस्मिन्नेवस्थाने एक एव । केवलं पर राजा अधिपिबतीत्यधिपः सुरायाः मद्यस्य अधिपः न । स्वर्गेतु राजा इन्द्रः सुराणान्देवानामाधिपः पतिः । कश्चिदपि विनायकः विरुद्धनायक. न स्वर्गेतु विनायकः गणेशः अस्ति । अत्रश्लेषव्यतिरेकावलकारौ ॥

10. यत्रेति ॥ चेतिभिन्नंपदं । लतासंबन्धः वल्लीयोगः कलिकानां कोरकाणां उपक्रम. आरंभश्च पादपेषु वृक्षेषु । पुरुषेषुतु चलतायाः लोलत्वस्य संबन्धः कलिः कलहः कोपः क्रोधः तयोः क्रमश्च नदृश्यते ॥ अत्रोत्तरत्रच परिसंख्यालंकारः ॥

11. यत्रेति ॥ चमरकाणां चमरमृगाणां वार्ता प्रवृत्तिः अन्यत्र चेतिभिन्नंपदं मरकस्य (बाहुल्येन) मरणस्य वार्ता । परमेण अधिकेन हिमेन तुहिनेन उपघातः उपद्रवः अन्यत्र परस्य उत्कृष्टस्य महिम्नः माहात्म्यस्य उपघातः विघातः तुहिनाचलस्य हिमवतः स्थलीषु अकृत्त्रिमप्रदेशेषु ॥

12. येश्चति ॥ योदेशः नीतिमाद्भिः पुरुषैः अधिष्ठितोपि युक्तोपि अनीति नीतिरहितः नविद्यते ईतिरातिवृष्ट्यादिरुपद्रवोयस्यसः अनीतिश्च सवटः वटैः न्यग्रोधैः सहितोपि अवटसंकुलः वटैः संकुलः निबिडः न अवटैः कूपादिगर्तैस्संकुलश्च कारुभिश्शिल्पिभिः उपयुतः युक्तः कुत्सितंरूपं कारूप तेन युतोपि अगता न भ्रष्टा रूपस्य आकारस्य शोभायस्मिं स्तथोक्तः अगैः नगै तरुभिश्च उपशोभितश्च । अत्रविरोधाभासालंकारः ॥

13. यत्रेति ॥ यत्रदेशे गुरोः बृहस्पतेः आचार्यस्यच व्यतिक्रमं अतिक्रमणं नक्षत्राणां राशयस्संघा. कुर्वन्ति नजनाः एवमुपरि मात्राणां नीलपीतादिवर्णावयवानां कलहं संघर्षं मात्रा जनन्या कलहश्च लेखशालिकाः चित्रशालाः । मित्रस्य सूर्यस्य सख्युश्च उदये उत्पत्तौ अभ्युदयेच द्वेषं उलूका दिवान्धाः । अपत्यानां

किं बहुना ।

देशः पुण्यतमोद्देशः कस्यासौ न प्रियो भवेत् ।
युक्तोऽनुक्रोशसंपन्नैर्यो जनैरिव योजनैः ॥ २८ ॥
तस्य विषयस्य मध्ये निषधो नामास्ति जनपदः प्रथितः ।
तत्र पुरी पुरुषोत्तमनिवासयोग्यास्ति निषधेति ॥ २९ ॥
जननीतिमुदितमनसा सततं सुस्वामिना कृतानन्दा ।
सा नगरी नगतनया गौरीव मनोहरा भाति ॥ ३० ॥

14. यस्यामभ्रंलिहेन्द्रनीलसालशिखरसहस्रानिभृतांशुजालबालशाद्वलाङ्कुराग्रग्रासलालसाः स्खलन्तः खे खेदयन्ति मध्येदिनं सादिनं रविरथतुरंगमाः ॥

पुत्राणां त्यागं विसर्जनं कोकिला· परभृताः ( कोकिलाः अपत्यसंरक्षणक्लेशं काकेनि॰क्षिपन्तीति प्रसिद्धिः) बन्धुजीवानां बन्धूकपुष्पाणां बन्धूनां जीवानाश्च विघातं ग्रीष्मस्य तपर्तोः दिवसाः कुर्वन्ति जनाः नकुर्वन्ति अत्र परिसंख्यालकारः ॥

२८. **देश इति** ॥ यः देशः अनुगताः परस्पर संबद्धाः क्रोशाः अष्टसहस्रहस्तपरिमाणानि तैः संपन्नैः युक्तैः योजनै. चतुर्भिः क्रोशैरिव अनुक्रोशेन दयया संपन्नैः जनैः युक्तः पुण्यतमाः अतिपवित्राः उद्देशाः अवान्तरभूभागाः यस्मिंस्तथोक्तः असौ देशः आर्यावर्तः कस्य प्रियः नभवेत् । अत्रश्लेषसवलितोपमालंकारः । चतुर्थपादगतं व्यवहितं यमकंशब्दालंकारश्च ॥

२९. **तस्येति** । **विषयस्य** (आर्यावर्ताख्यस्य) महादेशस्य । **जनपदः** देशः । **प्रथितः** । प्रसिद्धः । **पुरुषोत्तमः** । विष्णुः पुरुषश्रेष्ठश्च ॥

३०. **जनेति** । सा नगरी निषधापुरी गौरीव पार्वतीव सततं जनानां नीत्या जननी माता इति हेतोश्च मुदितं हृष्टं मनः यस्यतथोक्तेन सु शोभनेन स्वामिना राज्ञा स्कन्देनच । कृतानन्दा नगता ननष्टाः नयाः नीतयः यस्यां तथोक्ता नगस्य पर्वतस्य तनया पुत्रीच । मनौहरा रम्या मनसि हरः शिवः यस्यास्तथाभूताच भाति राजते अत्र श्लिष्टोपमा ॥

14. **यस्यामिति** ॥ यस्यान्नगर्यां अभ्रं (आकाशं) लिहन्तीति अभ्रंलिहाः अत्युन्नता इत्यर्थः 'वहाभ्रेलिहः' इति खश् । इन्द्रनीलरत्नरचिताः येसालाः प्राकाराः 'प्राकारेवरणस्सालः इत्यमरः । तेषां शिखराणां शृंगाणां जालानि समुहाएव बालाः शादः बालतृणमेष्वितिशाद्वलाः नवतृणप्रचुरदेशाः 'नडशादाड्ड्वलच्' इति-ड्वलच् । शाद्वलशब्दस्यात्रलक्षणया नवतृणान्यर्थः तेषां येंकुराः प्ररोहाः तेषाम-

15. यस्यां च स्फटिकमणिशिलानिबद्धभवनप्राङ्गणगतासु संचरद्गृहिणी-चरणालक्तकपदपङ्क्तिषु पतन्ति निर्मलसलिलाभ्यन्तरतरत्तरुणारुणकम-लकाङ्क्षया मुग्धमधुपपटलानि ॥

16. यस्यां च विविधमणिनिर्मितवासभवनभव्यभित्तिषु स्वच्छासु स्वां छायामवलोकयन्त्यः कृतापरस्त्रीशङ्काः कथमपि प्रत्यानीयन्ते प्रियैः प्रियतमाः ॥

17. यस्यां च दिव्यदेवकुलालंकृता स्वर्गा इव मार्गाः, सततमपांसु-वसनाः सागरा इव नागराः, समत्तवारणानि वनानीव भवनानि, सुरसेनान्विताः स्वर्गभूपा इव कूपाः, अधिकंधरोद्देशमुद्भासयन्तो हारा इव विहाराः ॥

ग्राणां ग्रासे भक्षणे लालसा अत्यासक्तिः येषान्तथोक्ताः अतएव स्खलन्तः गतिप्रति-घातवन्तः रवेः रथे (बद्धाः) तुरंगमाः अश्वाः खे आकाशे दिनस्यमध्ये मध्येदिनं 'पारेमध्ये षष्ठ्यावा' इत्यव्ययीभावः सादिनं सारथिं (अरुणं) खेदयन्ति आया-सवन्तं कुर्वन्ति । अंशुजालेत्यादौरूपकालंकारः भ्रान्तिमदलंकारोध्वन्यते ॥

15. **यस्याश्चेति** । स्फटिकमणिशिलाभिः निबद्धानां रचितानां भवनानां गृहाणां प्रांगणानि अजिराणि गतासु प्राप्तासु सञ्चरन्तीनां गृणिणीनां कुटुंबिनीनां चरणालक्तकानां पादलाक्षाणां पदानां चिह्नानां पङ्क्तिषु मुग्धानां भ्रान्तानां मधु-पानां भृंगाणां पटलानि संघाः निर्मलस्य सलिलस्य जलस्य अभ्यन्तरे मध्ये तरन्ति प्लवमानानि तरुणानि प्रौढानि अरुणकमलानि रक्तपद्मानीति कांक्षया वाञ्छया भ्रान्त्येतियावत् अतएवभ्रान्तिमदलंकारः निपतन्ति नितरांसक्तानिभवन्ति अत्र स्फटिकस्यजलं पदपंक्तेश्चकमलमुपमान ॥

16. **यस्यामिति** ॥ स्वच्छासु निर्मलासु विविधैर्मणिभिः रत्नैः निर्मितासु रचितासु वासभवनस्य वासगृहस्य भव्याभित्तिषु मंगलकुड्येषु स्वां स्वकीयां छायां प्रतिबिंबं अवलोकयन्त्यः पश्यन्त्यः प्रियतमाः प्रमदाः कृता अपराः इतरा स्त्रिय-इति शंकाः भ्रमाः याभिस्तथोक्तास्तत्यः प्रियैः नायकैः कथमपि कृच्छ्रेण प्रत्यानी-यन्ते प्रत्याश्वास्यन्ते । अत्रपूर्वदलंकारः ॥

17. **यस्यामिति ॥ दिव्येति** ॥ दिव्यैः रम्यैः देवकुलैः देवालयैः दिव्यैः स्वर्गोद्भवैः कल्पद्रुमादिभिः देवानां कुलैर्वंशैश्च अलंकृताः । नगरेभवाः नागराः पौराः अपांसु रेणुरहितं वसनं वस्त्रं येषान्तथोक्ताः । सागरास्तु अपां तीर्थानां सुष्ठुव-

१८. यस्यां च बहुलक्षणाः सुधावन्तो दृश्यन्तेऽन्तः प्रचुराः प्रासादा बहिश्च वारणेन्द्राः । सुशोभितरङ्गाः समालोक्यन्तेऽन्तः संगीतशाला बहिश्च क्रीडाकमलदीर्घिकाः । बहुधान्यनिरुद्धाः कथमप्यभिगम्यन्तेऽन्तः पण्यस्त्रियो बहिश्च क्षेत्रभूमयः । नानाशुकविभूषणाः शोभन्तेऽन्तः सभा बहिश्च सहकारवनराजयः । ससौगन्धिकप्रसारा विराजन्तेऽन्तर्विपणयो बहिश्च सलिलाशयाः ॥

किं बहुना ।

भूमयो बहिरन्तश्च नानारामोपशोभिताः ।
कुर्वन्ति सर्वदा यत्र विचित्रवयसां मुदम् ॥ ३१ ॥

सन्त्येष्विति सुवसनाः आधाराः **समन्तेति** । मत्तवारणैः वलभीभिः मत्तगजैश्च सहितानि "कूटागारं तुवलभीनिर्यूहोमत्तवारणं" इति वैजयन्ती ॥ **सुरेति** । कूपाः सुरसेन सुजलेन अन्विताः युक्ताः स्वर्गभूपास्तु सुराणां देवानां सेनया अन्विताश्च । **अधीति** । विहाराः देवतायतनानि क्रीडास्थानानिवा "देवतायतनं चैत्य विहार" इतियादवः । अधिकंयथातथा धराया भूमेः उद्देशे स्थलं हाराः मुक्ताहारास्तु कन्धरायाः कण्ठस्य उद्देशे प्रदेशे अधिकन्धरोद्देशं ॥ अव्ययंविभक्ति" इत्यादिनाविभक्त्यर्थेऽव्ययीभावः । उद्भासयन्तः प्रकाशयन्तः सन्ति ॥ अत्रश्लिष्टोपमा ॥

18. **यस्यामिति** ॥ अन्तः मध्ये प्रचुराः अधिकाः प्रासादाः नृपसदनानि बहुलाः अधिकाःक्षणाः उत्सवाः भूमिकावा येषान्तथोक्ताः सुधासुधालेपः तद्वन्तश्च दृश्यन्ते बहिः प्रचुराः वारणेन्द्राः गजेन्द्रास्तु बहूनि लक्षणानि येषान्तथोक्ताः सुष्ठु सम्यक् धावन्तश्च दृश्यन्ते अत्र श्लिष्टतुल्ययोगिता । एवमुत्तरत्रापि । **सुशोभितरंगाः** । सुशोभितः रंगः नर्तनस्थानं सुशोभिनः तरगाः ऊर्मयः यासुतथाभूताः । **दीर्घिकाः** । सरांसि । **बहिरिति** । अन्तः पण्यन्ते (मूल्येनवशीक्रियन्तइति) पण्याः तथाभूताः स्त्रियः गणिकाः बहुधा अनेकैः प्रकारैः अन्यैरितरैः (विटैः) निरुद्धाः नितरांवेष्टिता स्सत्यः बहिः क्षेत्रभूमयः केदारप्रदेशाश्च बहुभिः धान्यैः निरुद्धास्सत्यः कथमपि अभिगम्यन्ते प्राप्यन्ते । **नानेति** । नानाविधैः आशुकविभिः भूष्यन्ते नानाविधैः शुकैश्च विभूष्यन्तइतितथाभूताः । सभाः सभास्थानानि । **सहेति** । चूतवनपङ्क्तयः । **सेति** । सुगन्धीनि द्रव्याणि पण्यमेषान्ते सौगन्धिकाः वणिजः तेषां सौगन्धिकानां कल्हाराणाञ्च प्रसारैर्विस्तारैः सहिताः । **विराजन्ते** । शोभन्ते । **विपणयः** । पण्यवीथिकाः । **सलिलाशयाः** । कासाराः ॥

३१. **भूमयइति** ॥ यत्र यस्यां बहिः अन्तश्च भूमयः प्रदेशाः नाना

19. यस्यां च भक्तभाजो देवतायतनेषु देवताः संनिधाना दृश्यन्ते हट्टेषु वणिग्जनाः। अक्षरसावधानाः कविगोष्ठीषु कवयो विलोक्यन्ते द्यूतस्थानेषु द्यूतकाराः। कान्तारागप्रियाः करिणो राजद्वारेषु संचरन्ति वेश्याङ्गणेषु भुजङ्गाः॥

20. यस्यां च चतुरुदधिवेलाविराजितसकलधराचक्रचूडामणौ, मणिकर्मनिर्मितरम्यहर्म्यतया सुरपतिपुरीपराभवकारिण्याम् । अव्ययभावो व्याकरणोपसर्गेषु न धनिनां धनेषु । दानविच्छित्तिरुन्माद्यत्करिकपोलमण्डलेषु न त्यागिगृहेषु । भोगभङ्गो भुजङ्गेषु न विलासिलोकेषु ।

आरामैः उपवनैः रामाभिः स्त्रीभिश्च उपशोभितास्सत्यः सर्वदा विचित्रं रम्यं वयः येषान्ते विचित्रवयसः युवानः विचित्राणि विविधानि वयांसि पक्षिणश्च तेषां 'खगबाल्यादिनोर्वयः' इत्यमर । मुदं सन्तोषं कुर्वते । अत्रतुल्ययोगिताश्लिष्टा ॥

19 **यस्यामिति** ॥ यस्यान्नगर्यां देवतानां आयतनेषु आलयेषु देवताः भक्तान् भक्तिमतोजनान् भजन्ति प्राप्नुवन्तीतिभक्तभाजः सन्निधानं सान्निध्य आसामस्तीति सन्निधानाः 'अर्शआदिभ्यः' इत्यच् । सान्निध्यवत्यश्च दृश्यन्ते हट्टेषु आपणेषु वणिग्जना नैगमाश्च भक्त अन्नं भजन्तीतिभक्तभाजः सम्यक् निधानं निधिः येषान्तेसन्निधानाश्च दृश्यन्ते । कवीनां गोष्ठीषु सभासु कवयः कवयितारः अक्षरेषु वर्णेषु सावधानाः अवहिताः द्यूतस्थानेषु देवनस्थानेषु द्यूतकाराः अक्षक्रीडाकारिणः अक्षेषु पाशकेषु रसेन प्रीत्या अवधान जागरूकतायेषात्तथोक्ताश्च विलोक्यन्ते । कान्तारे वने अगेपु सल्लक्यादिवृक्षेषु प्रियाः करिणः राज्ञः द्वारेषु गृहद्वारेषु सञ्चरन्ति कान्तासु वधूषु रागः अनुरागः येषान्ते कान्तारागाः अतएव प्रियाः भुजगाः विटाः वेश्यानां गणिकानां अंगणेषु चत्वरेषु सञ्चरन्ति । अत्रपूर्ववदलंकारः॥

20. **यस्यामिति** ॥ चतुर्णां उदधीनां समुद्राणां वेलाभिः कूलैः विराजितस्य सकलस्य धराचक्रस्य भूमण्डलस्य चूडामणौ शिरोरत्नायमानायां मणीनां रत्नानां कर्मणा क्रियया यद्वा मणिकर्मभिः रत्नशिल्पिभिः निर्मितानि रम्याणि हर्म्याणि धनिनिवासाः यस्यान्तस्याभावस्तत्ता तया सुरपतिपुर्याः अमरावत्याः पराभवं अवमतिं ताच्छील्येनकुर्वत्यां यस्यान्नगर्यां अव्ययभावः 'स्वरादिनिपातमव्ययं' इति अव्ययसंज्ञावत्वं व्याकरणे (प्रसिद्धेषु) उपसर्गेषु 'उपसर्गाः क्रियायोगे' इतिविहितोपसर्गसञ्ज्ञेषुप्रादिषु अस्ति धनिनां गृहेषु न व्ययः दानादिनोपयोगः येषुतेषां भाव दानाद्युपभोगाभाववत्वमित्यर्थः नास्ति । अत्रपरिसङ्ख्यालंकारः एवमुत्तरत्रापि । दानस्य मदस्य विच्छित्ति: शोभा उन्माद्यतां अधिकमदप्राप्नुवतां करिणां कपोलमण्डलेषु

स्नेहक्षयो रजनिविरामविरमत्प्रदीपपात्रेषु न. प्रतिपन्नजनहृदयेषु । कूट-प्रयोगो गीततानविशेषेषु न व्यवहारेषु । वृत्तिकलहो वैयाकरणच्छात्रेषु न स्वामिभृत्येषु । स्थानकभेदश्चित्रकेषु न सत्पुरुषेषु ॥

किं बहुना ।

त्रिदिवपुरसमृद्धिस्पर्धया भान्ति यस्यां
सुरसदनशिखाग्रेष्वाग्रहग्रन्थिनद्धाः ।
नभसि पवनवेल्लत्पल्लवैरुल्लसद्भिः
परममिह वहन्त्यो वैभवं वैजयन्त्यः ॥ ३२ ॥

गण्डदेशेषु । अस्ति त्यागिनां दातॄणां गृहेषु दानस्य त्यागस्य विच्छित्तिर्विच्छेदः नास्ति । भोगस्य सर्पवपुषः भगः आमर्दन कुण्डलीकरणमितियावत् भुजंगेषु सर्पेषु अस्ति भोगस्यसुखस्य भगः विघातः विलासः लीला तद्वत्सुलोकेषुजनेषु नास्ति । स्नेहस्य तैलादेः क्षयः नाशः रजन्याः रात्रेः विरामे अवसाने विरमत्सु शून्यीभवत्सु प्रदीपपात्रेषु आस्ति स्नेहस्य प्रीते क्षय प्रतिपन्नानां (स्नेहवत्वेन) विदितानां जनानां हृदयेषु नास्ति । **कूटप्रयोगः** । कूटशब्दप्रयोगः गीतस्य गानस्य तानविशेषेषु तानभेदेषु । अस्ति । तानोनामस्वरान्तरप्रवर्तकोरागास्थितिप्रवृत्त्यादिहेतुरंशापरनामा वंशवाद्यसाध्यः प्रधानभूतः स्वरः । 'तानस्त्वंशस्वरोमत' ' इत्यभिनवगुप्तः । 'गातायंयंस्वरंगच्छे त्तंत वंशेनतानयेत्' इतिभरतः । तानाः द्विप्रकाराः एके कूटाख्याः पञ्चत्रिंशत् अन्येच शुद्धाख्याश्चतुर्दश एवमेकोनपञ्चाशत् अतएव 'तानान्येकोनपञ्चाशत्' इतिवैजयन्ती । व्यवहारेषुतु कूटस्यकपटस्य प्रयोगः उपयोगः नास्ति । वृत्तौ शास्त्रविवरणे वार्तिकग्रन्थे काशिकावृत्तौवा कलहः स्पर्धा व्याकरणमधीयतेविदान्तिवा वैयाकरणाः तादृशेषु च्छात्रेषुशिष्येषु अस्ति स्वामिभृत्येषुतु वृत्तौ आजीवने कलह पैशुन्य नास्ति । स्थानकानां (नवानां) भेदः चित्रकेषु रम्येषुचित्रेपु । अस्ति । तद्यथा । सम्मुखंपराङ्मुखं संपूर्णावयवरूपं पार्श्वागतञ्चचित्रं भवति । ततोभागद्वयेनैकतः पतताऽन्यत्रच चटता क्रमेण ऋजु ऋज्वागत द्व्यर्ध अक्ष अर्धऋजु संज्ञानिचेति स्थितस्थानकानिपञ्च गमनंआलीढं त्वरितं त्रिभंगं इत्याख्यानिच गच्छत्स्थानकानिचत्वारि एवञ्चनवानां स्थानकानांभेदश्चित्रेपु । सत्सुपुरुषेषुतु । स्थानानामेवस्थानकानां रक्षणीयनगरादीनां भेदः उपजापः नास्ति ॥

३२. **त्रिदिवेति** । यस्यां नगर्यां सुरसदनानां देवालयानां शिखानां शिखराणां चूडानामितिध्वन्यते अग्रेषु आगृह्यन्ते एभिरित्याग्रहाः आयसाविष्कम्भाः तेषां ग्रन्थिषु पर्वसु नद्धाः बद्धाः आग्रहेणाभिनिवेशेन ग्रन्थिनद्धाः बद्धवस्त्रादिपरिकराश्चै

अपि च ।

चार्वी सदा सदाचारसज्जसज्जनसेविता ।
नगरी न गरीयस्या संपदा सा विवर्जिता ॥ २३ ॥

21. तस्यामासीन्निजभुजयुगलबलविदलितसकलवैरिवृन्दसुन्दरीनेत्रनीलोत्पलगलद्बहलबाष्पपूरप्लवमानप्रतापराजहंसः, सकलजलनिधिवेलावननिखातकीर्तिस्तम्भभूषितभुवनवलयः, विश्वंभराभोग इव बहुधारणक्षमः, प्रासाद इव नवसुधाहारी, रविरिवानेकधामाश्रयः । दनुजलोक इव सदानवः स्त्रीजनस्य, वसिष्ठ इव विश्वामित्रत्रासजननः, जनमेजय इव परीक्षितनयः, परशुराम इव परशुभासितः, राघव इवालघुकोदण्डभङ्गरञ्जितजनकः, सुमेरुरिव जातरूपसंपत्तिः, तुहिनाचल इव पुण्यभागीरथीसहितः चिन्तामणिः प्रणयिनाम्, अग्रणीः साङ्ग्रामिकाणाम्, उपा-

तिध्वन्यते नभसि आकाशे उल्लसद्भिः राजद्भिः पवनेन वातेन वेल्लद्भिः चञ्चलैः पल्लवैः अञ्चलैः इह अत्रलोके परमं अधिकं वैभवं माहात्म्यं वहन्त्यः धारयन्त्यः वैजयन्त्यः पताकाः त्रिदिवपुरस्य अमरावत्याः समृद्धौ संपदि स्पर्द्धया सघर्षेण अभिभवेच्छयेतियावत् (युक्ताइव) भान्ति प्रकाशन्ते । विजिगीषुरपि बद्धपरिकरः प्रकटितस्वविभवः स्पर्द्धया पताकान्दर्शयतीति भावः । मालिनीवृत्तम् । गम्योत्प्रेक्षालङ्कारः 'अप्रकृतगुणक्रियासम्बन्धादप्रकृतत्वेनप्रकृतस्य सम्भावनमुत्प्रेक्षा' इति लक्षणात् । व्यञ्जकाप्रयोगाद्गम्यत्वम् ॥

२३. **चार्वीति** । चार्वी मनोज्ञा 'वोतोगुणवचनात्' इति विकल्पेनङीष् । सदा सर्वदा सति साधौ आचारे आचरणे सज्जैः बद्धकवचैः सज्जनैः सेविता आश्रिता सा नगरी गरीयस्या अतिशयेन गुर्व्या संपदा संपत्या विवर्जिता न अपितु युक्तेत्यर्थः । अत्राद्यपादे अव्यवहितमध्यभागयमकं द्वितीयतृतीयपादयोः अव्यवहितम्मिश्रश्चादिभागयमकंशब्दालकारः ॥

21. **तस्यामिति** । तस्यां नगर्यां नलो नाम राजासीत् । तंविशिनष्टि । **निजेत्यादिना** । निजभुजयोः युगलस्य द्वंद्वस्य बलेन विदालितानां निर्भिन्नानां सकलवैरिणां समस्तरिपूणां बृन्दस्य समूहस्य सुन्दरीणां स्त्रीणां नेत्रनीलोत्पलेभ्यः नीलारविन्दसदृशनयनेभ्यः गलतां स्रंसमानानां बहलानामधिकानां बाष्पाणां अश्रूणां पूरे प्रवाहे प्लवमानः तरन् प्रतापः ओजएव राजहंसः कलहंसः यस्यतथोक्तः । सकलजलनिधीनां वेलासु कूलेषु (स्थितेषु) वनेषु निखातैः स्थापितैः कीर्तिस्तम्भैः

ध्यायोऽध्ययनविदाम्, आदर्शो दर्शनीयानाम्, आचार्यः शौर्यशालिनाम्, उपदेशकः शस्त्रशास्त्रस्य, परिवृढो दृढप्रहारिणाम्, अग्रगण्यः पुण्यकारिणाम्, अपश्चिमो विपश्चिताम्, अपाश्चात्यस्त्यागवताम्, अचरमश्चातुर्याचार्याणाम्, अपर्यन्तभूभाराधारस्तम्भभूतभुजकाण्डकीलितसालभञ्जिकायमानविजयश्रीः, श्रीवीरसेनसूनुः, समस्तजगत्प्रासादशिरःशेखरीभूतकान्तकीर्तिध्वजो, राजा, राज्यलक्ष्मीकरेणुकाचापलसंयमनशृङ्खलः, खलवृन्दकन्दलदावानलो नलो नाम ॥

कीर्तिबोधकविजयवर्णावलीघटितस्थूणाभिः भूषितभुवनवलयः अलंकृतजगन्मण्डलः विश्वम्भरायाः भूमेः आभोगः विस्तारइव बहूनां धारणे बहुधा रणे युद्धेच क्षमः शक्तः। प्रासाद राजगृहमिव न वसुधां देवद्विजभूमि ताच्छील्येनहरतीति नवसुधाहारी पक्षे नवया नूतनया सुधया लेपविशेषेण हारी रम्यः। रविरिव अनेकधा माया लक्ष्म्याः आश्रयः अनेकेषां बहूनां धाम्नां किरणानां आश्रयश्च। दनुजानामसुराणां लोकइव सदा सर्वदा नवः रम्यतया नूतनएव दानवैस्सहितश्च। **विश्वेति।** विश्वेषां समस्तानाममित्राणां शत्रूणां विश्वामित्रस्यमुनेश्च त्रासजननः भयकृत् जनानेजयति (कम्पयति) इति जनमेजयः अभिमन्युपौत्रइव परीक्षितः नयः नीतिर्येनसः परीक्षेः अभिमन्युपुत्रस्य तनयश्च। **परश्चिति।** परस्मिन् श्रेष्ठे शुभे मङ्गले आसितः स्थितः परशुना भासितः दीप्तश्च। **अलध्विति।** अलघुरेवालघुकः महान् दण्डस्य वधपरिक्लेशार्थहरणलक्षणस्याशिक्षणस्य भंगेन मोचनेन रञ्जिताः तोषिताः जनाः येनतथोक्तः अलघोः महतः कोदण्डस्य शिवचापस्य भङ्गेन भञ्जनेन रञ्जितः जनकः सीरध्वजः येनतथोक्तश्च। सुमेरुः मेरुगिरिरिव। जाता रूपस्य सम्पत्तिः सम्पत् यस्यसः जातरूपं सुवर्णं संपत्तिर्यस्यतथोक्तश्च। तुहिनाचलः हिमाद्रिरिव। **पुण्येति।** पुण्यभागी सुकृतभजनशीलः रथीरथवान् सहितः हितैर्युक्तः पुण्यया पवित्रया भागीरथ्या गङ्गया सहितश्च। प्रणयिनामर्थिनां चिन्तामणिः चिन्तितप्रदः मणिरिव। संग्रामायप्रभवन्तीति सांग्रामिका युद्धशूराः 'तस्मैप्रभवतिसन्तापादिभ्यः' इति ठञ्। तेषां। अग्रणीः श्रेष्ठः। अध्ययनेन वेदादीनामधीत्या वित् ज्ञान येषान्ते अध्ययनविदः यद्वा अध्ययनं अध्यायः तद्विदां उपेत्याधीयतेस्मादित्युपाध्यायः अध्यापकः 'एकदेशन्तुवेदस्यवेदांगान्यपिवापुनः। योध्यापयतिवृत्त्यर्थमुपाध्यायः सउच्यते' इति॥ द्रष्टुं योग्यानां रम्यवस्तूनां आदर्शः दर्पणतुल्यः अत्यन्तनिर्मलकान्तिमत्वादादर्शवत् बिंबग्राहीत्यर्थः। यद्वा द्रष्टुं ज्ञातुं योग्यानां (शास्त्राणां) आदर्शः अर्थप्रकाशकइत्यर्थः शौर्येण शालन्तेप्रकाशन्त इति

22. यस्येन्दुकुन्दकुमुदकान्तयः सकललोककर्णप्रियातिथयो गुणाः सततमेकब्रह्माण्डसंपुटसंकीर्णनिवासव्यसनविषादिनः पुनरनेकब्रह्माण्डकोटिघटनामभ्यर्थयमाना इव भगवतो विश्वसृजः कमलसंभवस्य कर्णलग्नाः स्वर्गलोकमधिवसन्ति स्म ॥

23. यस्मिंश्च राजनि जनितजनानन्दे नन्दयति मेदिनीम्, गीतेषु

शौर्यशालिनस्तेषां आचार्यः तत्तुल्यः 'उपनीयतुयः शिष्यं वेदमध्यापयेद्द्विजः । सांगञ्च सरहस्यञ्च तमाचार्यंप्रचक्षते' इति ॥ शस्त्राणां आयुधानां शास्त्राणाञ्च समाहारश्शस्त्रशास्त्रन्तस्य यद्वा आयुधशास्त्रस्य उपदेशकः उपदेष्टा । दृढ यथा तथा प्रहर्तुं शीलमेषां दृढप्रहारिणः तेषां परिबृढः प्रभु । अग्रगण्यः अग्रेगणयितुंशक्यः । विपश्चितां । विदुषां । न पश्चाद्भवः अपश्चिमः मुख्यः । त्यागवतां । दातॄणां । न पश्चाद्भवः अपाश्चात्यः प्रथमः चातुर्यस्य वैदग्ध्यस्य आचार्याणां बोधयितॄणां अचरमः प्रथमः । अपर्यन्तस्य अपरिमितस्य भूभारस्य आधारस्तम्भभूतयोः भुजकाण्डयोः बाहुदण्डयोः कीलिता घटिता या सालभञ्जिका पाञ्चालिका तद्वदाचरिता विजयश्रीः जयलक्ष्मीः यस्यतथोक्तः । **समस्तेति** । समस्तजगतामेवप्रासादशिरसां शेखरीभूतः अवतंसीभूतः कान्तः रम्यः कीर्तिरेवध्वजः यस्यतथोक्तः । **राज्येति** । राज्यलक्ष्मीरेव करेणुका इभी तस्याश्चापलस्य चञ्चलत्वस्य संयमने बन्धने शृंखलः निगडः । 'शृखलापुस्कटीवस्त्रबन्धेपिनिगडेत्रिषु' इतिमेदिनी । **खलेति** । खलानान्दुष्टानां बृन्दान्येव कन्दलानि नवांकुराः तेषां दावानलः दावाग्निः । अत्ररूपकोपमानश्लेषाअलंकाराः ॥

22. **यस्येति** । यस्य नलस्य इन्दुः चन्द्रः कुन्दं माघ्यकुसुमं कुमुदं सितोत्पल तेषां कान्तिरिवकान्तिर्येषान्तथोक्ताः सकललोकानां कर्णानां श्रोत्राणां प्रियातिथयः गुणाः सततं सदा एकस्मिन् सपुटसदृशे ब्रह्माण्डे संकीर्णनिवासेन निबिडस्थित्या यद्व्यसनं श्रमः तेन विषादिनेतताच्छील्येनोतितथोक्तास्सन्तः । पुनः । अनेकब्रह्माण्डकोटीनां घटनां निर्माणं अभ्यर्थयमानाः प्रार्थयमानाइव भगवतः विश्व सृष्टवतः । नारायणनाभिपद्मोद्भवस्य ब्रह्मणः । कर्णेषु लग्नाः सक्तास्सन्तः सुष्ठुअर्ज्यतइति स्वर्गः लोक्यतेप्रकाश्यतइतिलोकः तं मुमुक्षुभिः प्रार्थ्यमानं स्वतः प्रकाशमानञ्चब्रह्मलोकमित्यर्थः । अधिवसन्तिस्म । तत्रास्थिताइत्यर्थः 'उपान्वध्याङ्वसः' इत्याधारस्यकर्मत्वं । 'लट्स्मे' इतिभूतेलट् ॥ अत्रोपमानोत्प्रेक्षेअलंकारौ ॥

23. **यस्मिन्निति** । **नन्दयति** । सन्तोषयति सति । **मेदिनीं** । भूमिं । **जातिसंकराः** । जातिषु नन्दयन्तीप्रभृतिषु अष्टादशजातिषु गानशास्त्रप्रसिद्धासु

जातिसंकराः, तालेषु नानालयभङ्गाः, नृत्येषु विषमकरणप्रयोगाः, वाद्येषु दण्डकरप्रहाराः, पुष्पकर्मारम्भेषु प्रबन्धाः, शारिद्यूतेषु पाशप्रयोगाः, पुष्पितकेतकीषु हस्तच्छेदाः, न्यग्रोधेषु पादकल्पनाः, कञ्चुकमण्डनेषु नेत्रविकर्तनानि, आसन् । न प्रजासु ॥

24. यश्च कोऽप्यन्यादृश एव लोकपालः । तथाहि । अपूर्वो विबुधपतिः, अदण्डकरो धर्मराजः, अजघन्यः प्रचेताः अनुत्तरो धनदः ॥

25. येन प्रचण्डदोर्दण्डमण्डपमण्डलीविश्रान्तविजयश्रिया श्रवणोत्पल-

संकरः परस्परमिश्रणं जातीनां विप्रादीनां संकरः परस्परसांकर्यञ्च । **तालेषु** । चञ्चत्पुटादिषु **नानेति** । नाना लयानां द्रुतमध्यविलंबितलक्षणानां आलयानां गृहाणाञ्चभंगः रीति भञ्जनञ्च । **विषमेति** । विषमाणां परस्परभिन्नानां करणानां तलपुष्पपटादीनामष्टोत्तरशतसंख्यानां । विषमाणामेव विषमकाणां विरुद्धानां रणानां युद्धानाञ्च प्रयोगाः उपयोगाः । **दण्डेति** । दण्डेन कोणेन करेण पाणिनाच प्रहाराः ताडनानि । पक्षे दण्डः वधादिः करः राज्ञेदेयोंशः प्रहारः ताडनञ्च । **पुष्पेति** । पुष्पाणां कर्म । स्रग्रूपेणक्रिया तस्यारंभेषु । **प्रबन्धाः** । अनुस्यूततयाग्रथनानि । पक्षे प्रकर्षेणबन्धनानि । **शारिद्यूतेषु** । अक्षदेवनेषु । **पाशप्रयोगाः** । पाशानां बन्धानां पक्षे बन्धनरज्जूनां प्रयोगाः प्रकृष्टसंबन्धाः । शारयः दायैर्बध्यन्ते अक्षार्थस्तु पाशकएवप्रतीतः । **हस्तः** । केतकीगर्भः पाणिश्च । **न्यग्रोधेषु** । वटेषु । **पादकल्पनाः** । पादस्य मूलस्य अंघ्रेश्च कल्पनाः अवरोहादिनाविस्तृतता विकर्तनञ्च । **कञ्चुकं** । कवचं । वस्त्रं चोळकोवा । **नेत्रं** । वस्त्रविशेषः नयनञ्च । **विकर्तनानि** । विशेषेणांगप्रमाणेनकर्तनानि उत्पाटनानिच । अत्र गीतादिष्वेवजातिसंकरादीन्यासन्न प्रजास्वित्यवधारणात्परिसंख्यालंकारः ॥

24. **यश्चेति** । यः नळः कोपि आश्चर्यहेतु अन्यादृशः ये लोकंपालयन्ति तेभ्यइन्द्रादिभ्यः विसदृशः । लोकपालः लोकंप्रजांपालयतीतितथोक्तः राजा इन्द्रादिश्च । अन्यादृशत्वमेवविशदयति । **तथाहीत्यादिना** । विबुधानां देवानां पतिरिन्द्रः सपूर्वः पूर्वदिग्युक्तः । नलस्तु अपूर्वः उत्कृष्टः विद्वत्पतिश्च । धर्मराजः यमः दण्डपाणिः । नळस्तु ( करोतीतिकरः ) न दण्डस्य वधादेः करः । धर्मप्रधानोराजाच । प्रचेताः वरुणः । सह जघन्यया पश्चिमया वर्तते । नळस्तु अजघन्यः अकुत्सितः प्रकृष्टमनाश्च । धनदः कुबेरः सहोत्तरया दिशा वर्तते । नलस्तु नविद्यतेउत्तरः उत्कृष्टः यस्मात् अनुत्तरः धनदाताच । अत्रविरोधाभासालंकारः ॥

25. **येनेति** । प्रचण्डः उग्रः दोर्दण्डएव मण्डपः जनाश्रयः तस्य मण्डल्यां प्रदेशे विश्रान्ता आयासनिवृत्तिं याता विजयश्रीर्यस्य तेन । श्रवणयोः कर्णयोः

दलायमानमानिनीमानलुण्टाकलोचनेन पृथ्वी प्रिया च कामरूपधारिणी शातेन भुक्ता ॥

26. यस्याः सकलजनमनोहारिविशेषकम्, पृथुललाटमण्डलम्, अभिलषणीयकान्तयः कुन्तलाः, श्लाघनीयो नासिक्यभागः, बहुलवलीकः सरोमालिकालंकारश्च मध्यदेशः, प्रकटितकामकोटिविलासः काञ्चीप्रदेशः ॥

किं बहुना ।

27. यस्याः कृष्णागुरुचन्दनामोदबहुलकुचाभोगभूषणा नृत्यतीवाङ्गरङ्गे रमणीयतया निरुपमा नवा यौवनश्रीः ॥

उत्पलदलायमाने नीलोत्पलपत्रायमाणे मानिनीनां मानवतीनां मानस्य अभिमानस्य लुण्टाके अपहर्तृणी लोचने यस्य तेन । येन नलेन कामरूपं देशविशेषं काम्यत इति काममभिलषणीयं काममतिशयेनवा रूपञ्च धरतीत्येवंशीला पृथ्वी भूमिः प्रिया कान्ताच । शातेन सुखेन । 'शर्मशातसुखानिच' इत्यमरः । भुक्ता रक्षिता अनुभूताच । अत्र रूपकोपमानश्लेषतुल्ययोगिता अलङ्काराः ॥

26. **यस्या इति** । यस्याः भुवः कान्तायाश्च । सकलजनानां मनोहारि विशेषकं तदाख्योदेशः तिलकञ्च अस्ति । पृथुलं विस्तृत लाटमण्डलं लाटदेशः पृथु विशालं ललाटमण्डलं फालदेशश्च अस्ति । अभिलषणीयकान्तयः कमनीयशोभाः । कुन्तलाः तदाख्यदेशखण्डाः अळकाश्च सन्ति । श्लाघनीयः प्रशस्यः । नासिक्य इति भागः देशखण्डः नासिकायां भवः नासिक्यः भागः प्रदेशः अस्ति वह्वयः अधिकाः लवल्यः लताविशेषाः यस्मिंस्तथोक्तः बहुलाः अधिकाः नीलावा वल्यः उदररेखाः यस्मिंस्तथोक्तश्च । सरसां तटाकानां मालिका पङ्क्तिः अलङ्कारः यस्य तथोक्तः रोम्णां तनुरुहाणां आळिरेव रोमालिका सैवालङ्कारस्तेनसहितश्च मध्यदेशः तदाख्योदेशः अवलग्नभागश्च अस्ति । प्रकटितः विशदीकृतः कामकोट्याः कामाक्षीदेव्याः अनङ्गोत्कर्षस्यच विलासः यस्मिंस्तथोक्तः काञ्चीप्रदेशः काञ्चीपुरी श्रोणीच अस्ति । अत्रश्लेषालङ्कारः ॥

27. **यस्याइति** ॥ यस्याः भूमेः अंगे अंगाख्यदेशेएव रंगे नर्तनस्थले निरुपमानवायौ सति । कृष्णा पिप्पली अगरुचन्दनौ वृक्षविशेषौ तेषां आमोदः परिमळः बहूनां लकुचानां जंबीराणां आभोगोविस्तारः तौ भूषणंयस्यास्तथोक्ता । रमणीयतया (युक्ता) वनश्रीः नृत्यतीव वाततरलितत्वमेवनर्तनत्वेनोत्प्रेक्षितं । पक्षे । यस्याः

किं चान्यत् ।

२८. अन्य एव नवावतारः स कोऽपि पुरुषोत्तमो योनमीनरूपदूषितः, नाङ्गीकृतविश्वंभराभारोऽपि कूर्मीकृतात्मा, न वराहवपुषा क्लेशेन पृथ्वीं बभार, न च नरसिंहः समुत्सन्नहिरण्यकशिपुः, न बलिराजबन्धनविधौ वामनोदैन्यमकरोत्, नापि रामोलङ्केश्वरश्रियमपाहरत्, नापि बुद्धः कल्किकुलावतारी ॥

प्रियायाः कालागरुचन्दनयोरामोदेन व्याप्तस्तनविस्तारमण्डना निरुपमा नवा यौवनश्रीः रमणीयतया अंगेशरीरेएवरंगे नृत्यतीव ॥ अत्रश्लेषोत्प्रेक्षेअलंकारौ ॥

28. **किञ्चेति** । सः नलः कोपि अपरिच्छेद्यमहिमा नवः पूर्वविलक्षणः अवतारः जन्म यस्यतथोक्तः । अन्यः सर्वनृपेभ्यः अन्यः असाधारणएव पुरुषोत्तमः पुरुषश्रेष्ठः य नलः । अमः रोगः तद्वान् अमी न अमी अनमी नीरोगः यद्वा नमयति शत्रूनवश्यमिति नमी । तथा न रूपे दूषितः । यद्वा मीनेनरूप्यतेलक्ष्यतइति मीनरूपः मीनकेतनः तेन दूषितोन । तथा स्वीकृतसमस्तधराधुरोपि कूर्मिभंगुरः यद्वा कुत्सिता ऊर्मिः पीडा यस्यसः कूर्मिः । 'ऊर्मिः पीडाजवोत्कण्ठाभंगप्राकाश्यवीचिषु' इति । अकूर्मिः कूर्मिः संपद्यमानोभूतः कूर्मीभूतः आत्मादेहः यस्यतथोक्तः । न । अंगीकृतभारोहिपीडावान्भवति नतथायमितिविरोधाभासः । तथा वरं आहवं युद्धं पुष्णता क्लेशेन पृथ्वीं न बभार अपितुसुखेनेत्यर्थः । नरेषु सिंहः शौर्यात् समुत्सन्नं नाशितं हिरण्यं धनं कशिपु भोजनाच्छादनादि यस्मात्तथोक्तोन । तथा बलिनां राज्ञां बन्धनस्य विधौवा विधानेवा मनोदैन्यञ्च नाकरोत् । तथा रामः सुन्दरः अलं अत्यर्थं कस्य ब्रह्मणः ईश्वरस्याशिवस्यच श्रियंनापाहरत् देवस्वापहारीनेत्यर्थः । बुद्धः विद्वान् नापि कल्किनां पापिनां कुलोत्पन्नः । अन्यएव पुराणपुरुषाद्दशावताराद्विसदृशएव । नवावतारः नवसंख्यावतारः । कोप्ययं पुरुषोत्तमोविष्णुरित्युक्तिलेशः । तत्पक्षे मीनकूर्मवराहनरसिंहवामनरामबुद्धकल्किनोऽवताराः । हिरण्यकशिपुबलिलंकेश्वरास्तत्प्रतिपक्षाः । रामः परशुरामोपि । तदा 'अनुदराकन्या' इतिवत् नञः अल्पार्थकत्वमंगीकृत्य न (अल्पः) लंकेश्वरः यस्यसः अलकेश्वरः कार्तवीर्यार्जुनः । अर्जुनेनदिजितोरावणः कारायांनिवेशित इति अर्जुनापेक्षयारावणस्याल्पत्वमितिभावः । तस्यश्रियमपहृतवान् । रामः कृष्णोपि । तदा अलं अत्यर्थं कस्यजलस्य यमुनाह्रदस्य ईश्वरः कालीयसर्पस्तस्यश्रियमपहृतवान् ॥ अत्रश्लेषविरोधाभासावलंकारौ ॥

किं बहुना ।

धन्यास्ते दिवसाः स येषु समभूद्भूपालचूडामणि-
लोकालोकगिरीन्द्रमुद्रितमहीविश्रान्तकीर्तिर्नलः ।
लोकास्तेऽपि चिरंतनाः सुकृतिनस्तद्वक्त्रपङ्केरुहे
यैर्विस्फारितनेत्रपत्रपुटकैर्लावण्यमास्वादितम् ॥ ३४ ॥

अपिच ।

ये कुन्दद्युतयः समस्तभुवनैः कर्णावतंसीकृता
यैः सर्वत्र शलाकयेव लिखितैर्दिग्भित्तयश्चित्रिताः ।
यैर्वक्तुं हृदि कल्पितैरपि वयं हर्षेण रोमाञ्चिता-
स्तेषां पार्थिवपुंगवः स महतामेको गुणानां निधिः ॥ ३५ ॥

29. यस्य च युधिष्ठिरस्येव न क्वचिदपार्थो वचनक्रमः, मरुमण्डलमि-

३४. **धन्या इति** । लोकालोकः चक्रवाल इति गिरीन्द्रस्तेन मुद्रितायां चिह्नितायां मह्यां भुवि विश्रान्ता व्याप्तता कीर्तिर्यस्यतथोक्तः भूपालानां राज्ञां चूडामणिशिरोरत्नं सः नलः येषु दिवसेषु समभूत्सञ्जातः स्थितवांश्च ते दिवसाः धन्याः धनंलब्धारः पुण्यवन्त इत्यर्थः । तस्य नलस्य वक्त्रपङ्केरुहे मुखाब्जे स्थितं लावण्यं कान्तिविशेषः 'मुक्ताफलेषुच्छायायास्तरळत्वमिवान्तरा । प्रतिभातियदङ्गेषु तल्लावण्यं प्रकीर्तितम्' इति । विस्फारिते विस्तारिते नेत्रे नयने पत्रपुटकौ पर्णरचितसंपुटकाविव येषान्तथोक्तैः यैर्लोकैः आस्वादितं लीढ दृष्टमित्यर्थः ते लोकाः जना अपि चिरंभवाः चिरन्तनाः 'सायञ्चिरं' इत्यादिना ट्युल्तुट्च । सुकृतिनः पुण्यवन्तः । अत्र काव्यलिंगमुपमाचालङ्कारौ । वृत्तंशार्दूलविक्रीडितम् ॥

३५. **य इति** । कुन्दद्युतयः माघ्यपुष्पसमानकान्तयः ये गुणाः समस्तैर्भुवनैर्लोकैः कर्णावतंसीकृताः श्रवणाभरणीकृताः । सर्वत्र शलाकया कूर्चिकया लिखितैरिवस्थितैः यैर्गुणैः दिग्भित्तयः दिशएवकुड्यानि दिगन्ता इत्यर्थः चित्रिताः सञ्जातचित्रा इवकृताः । वक्तुं वर्णयितुं हृदिमनसि कल्पितैः कृतैः स्मृतैरित्यर्थः यैर्गुणैः वयमपि हर्षेण मुदा रोमाञ्चिताः सञ्जातपुलकाः कृताः । तेषां महतां गुणानां कविसमयसिद्धशुक्लरूपान्वितानां शौर्यौदार्यादीनां पार्थिवपुङ्गवः नृपश्रेष्ठः सः नलः एक एव निधिः आस्पदं । अत्रोपमोत्प्रेक्षे अलङ्कारौ । वृत्तं पूर्ववत् ॥

29. **यस्येति** ॥ **अपार्थः** । अर्थादपेतः पृथायाः अपत्यंपुमान् पार्थः अर्जुनः तद्रहितश्च । मरुमण्डलं निर्जलभूमिः । **अपापं** । निष्पापं अपांसमूहः आप आपादपेतञ्च । **मानसं** । मनः । **महानसं** । महच्चतत् अनश्च महानसं पाकशाला

वापापं मानसम्, महानसमिव सूपकारसारं कर्म, कार्मुकमिव सत्कोटिगुणं दानम्, दानवकुलमिव हृष्टवृषपर्वोत्सवं राज्यम्, राजीवमिवं भ्रमरहितं सर्वदा हृदयम् ॥

३०. यश्च परमहेलाभिरतोऽप्यपारदारिकः । शान्तनुतनयोऽपि न कुरूपयुक्तः ॥

किं बहुना ।

सदाहंसाकुलं बिभ्रन्मानसं प्रचलज्जलम् ।
भूभृन्नाथोऽपि नो याति यस्य साम्यं हिमाचलः ॥ ३६ ॥

'अनोश्मायः' इत्यादिनासमासान्तः अच्प्रत्ययः । **सूपेति** । सुष्ठु उपकारेण सारं वर । सूपकारैः सूदैः सारञ्च । **कार्मुकं** । कर्मणेप्रभवति कार्मुक शरासनं 'कर्मणउकञ्' इत्युकञ् । **सदिति** । सत्सु सत्पात्रेषु (प्रतिपादनाद्धेतो) कोटिः कोटिसख्याः गुणाः गुणितानि यस्यतथोक्तं सन् विद्यमानः शोभनश्च कोटौ अग्रे गुणः ज्या यस्यतथोक्तञ्च । **दानवकुलं** । असुरगृहं । **हृष्टेति** । हृष्टाः वृषः धर्मः पर्व पौर्णमास्यादिः तत्कालकर्तव्यंकर्मेत्यर्थः । उत्सवः पुत्रजन्मविवाहादिश्च यस्मिंस्तथोक्तं पक्षे हृष्टः वृषपर्वण· तदाख्यस्यासुरपतेः उत्सवः यस्मिंस्तथोक्तं । **राजीवं** । पद्मं । **भ्रमेति** । भ्रमेण संशयेन रहितंहीनं भ्रमरेभ्यः भृंगेभ्यः हित अनुकूलञ्च । अत्राश्लिष्टोपमा ॥

३०. **यश्चेति** । यः नलः । **परेति** । परमायामुत्कृष्टायां हेलायां श्रृंगारचेष्टायां यद्वा परउत्कृष्टः महः उत्सवः यस्यांसा परमहा या इला भूः तस्यां अभिरतः आसक्तः । अपिर्विरोधे । तदा परस्य इतरस्य महेलायां भार्यायां अभिरतः । **अपारदारिकः** । न परदारान्गच्छति 'गच्छतौपरदारादिभ्यः' इतिठक् ॥ **शान्तेति** । शान्तः जितेन्द्रियः । नुत· स्तुतः नयः नीतिर्यस्यसः नुतनयश्च विरोधे शान्तनोः तदाख्यराजस्य तनयः पुत्रः भीष्मः । **कुर्वेति** । कुत्सितेन रूपेण युक्तः न । विरोधे कुरूणां कुरुवंशनृपाणान्दुर्योधनादीनां उपयुक्तः उपयोगी न । अत्र विरोधाभासोलंकारः ॥

३६. **सदेति** । हिमाचलः भूभृतां गिरीणां राज्ञाञ्च नाथोपि सदाहं सखेदंसाकुलं (आकुलशब्दः भावप्रधानः आकुलत्वार्थक·) व्याकुलतायुक्तं प्रचलत् कम्पमानं जलं (लडयोरभेदात्) जडं मानसं चित्तं बिभ्रत् धारयन् सन् (सिद्धान्ते सदा हंसाकुलं प्रचलत् चञ्चलं जलं यस्मिन् तथोक्तं मानसं तदाख्यं सरः बिभ्रत्) यस्य (निर्दाहं निराकुलं अप्रचलत् अजडं चित्तं बिभ्रतः) नलस्य साम्य नो याति । अत्र श्लेषव्यतिरेकावलङ्कारौ । व्यतिरेकलक्षणन्तु 'व्यतिरेकोविशेषश्चेदुपमानोपमेययोः' इति॥

अपि च ।

नक्षत्रभूः क्षत्रकुलप्रसूतेर्युक्तो नभोगैः खलु भोगभाजः ।

सुजातरूपोऽपि न याति यस्य समानतां कांचन काञ्चनाद्रिः ॥३७॥

31. तस्य च महामहीपतेरस्ति स्म प्रशस्तिस्तम्भः सकलश्रुतिशास्त्रशासनाक्षरमालिकानाम्, न्यग्रोधपादपः पुण्यकर्मप्ररोहाणाम्, आकरः साधुव्यवहाररत्नानाम्, इन्दुः पार्थिवनीतिज्योत्स्नायाः, कन्दः सकलकलाङ्कुरकलापस्य, सागरः समस्तपुरुषगुणमणीनाम्, आलानस्तम्भश्चपलराज्यलक्ष्मीकरेणुकायाः, सकलभुवनव्यापारपारावारनौकर्णधारः, सुधाम्भोनिधिडिण्डीरपिण्डपाण्डुरयशःकुशेशयखण्डमण्डितसकलसंसारसराः, सरागीकृतसमस्तपार्थिवानुजीवी, जीवितसमः, प्राणसमः, हृदयसमः, शरीरमात्रभिन्नो द्वितीय इवात्मा, कुलक्रमागतः, संक्रान्तिदर्पणः सुखदुःखयोः, स्वभावानुरक्तः, शुचिः, सत्यपूतवाक्, कृतज्ञः, ब्राह्मणः सालङ्कायनस्य सूनुः श्रुतशीलो नाम महामन्त्री ॥

३७. **नक्षत्रेति** । काञ्चनाद्रिः महामेरु सुष्ठु जातरूपं सुवर्णं यस्मिंस्तथोक्तोपि नलपक्षे सुष्ठु जातं जननं रूपं सौन्दर्यञ्च यस्य तथोक्तः । न क्षत्रात् क्षत्रियकुलात् भवतीति नक्षत्रभूः (सिद्धान्ते नक्षत्राणां भूः स्थानं) न भोगैः सुखैः युक्तः (सिद्धान्ते नभसि गच्छन्तीति नभोगाः देवाः तैर्युक्तः) सन् क्षत्रकुलात् प्रसूतिः उत्पत्तिर्यस्यतथोक्तस्य भोगभाजः सुखभाजः यस्य नलस्य काञ्चन काञ्चिदपि समानतां साम्यं नयाति खलु नगच्छत्येव अत्र आद्यद्वितीयतुर्यपादेषु व्यवहिताव्यवहितम्मिश्रं मध्यभागयमकं शब्दालङ्कारः । पूर्ववदर्थालङ्कारः । पूर्वत्र उपमेयाधिक्यं गम्यं अत्रतुवाचिकं । वृत्तमुपेन्द्रवज्रा 'उपेन्द्रवज्राजतजास्ततोगौ' इति लक्षणात् ॥

31. **तस्येति** । तस्य महतः महीपतेः ब्राह्मणः सालंकायनाख्यस्य सूनुः श्रुतशीलोनाम महान्मन्त्री आस्तिस्म आसीत् तं विशिनष्टि । **प्रशस्तीत्यादिना** । सकलश्रुतिशास्त्राण्येव शासनाक्षराणि लेख्याक्षराणि 'शासनंनिग्रहेलेख्ये वेदवाक्येषु कर्मणि । वाङ्नियोगेप्रहरणे शास्त्रेग्रामेचनिष्करे' इति यादवः । तेषां मालिकानां पङ्क्तीनां प्रशस्तिः प्रशसा तत्ख्यापकः स्तम्भः । (दानादिशासनाक्षराणि स्तंभेषु विलिख्य प्रशंसार्थैस्तभाः निखन्यते इतिसंप्रदायः) पुण्यानि कर्माण्येव प्ररोहाः अंकुरास्तेषां न्यग्रोधपादपः वटवृक्षः । साधुव्यवहाराणां सदाचाराणामेव रत्नानां मणीनां आकरः खनिः । पार्थिवनीतेः राजनीतेरेव ज्योत्स्नायाः कौमुद्याः इन्दुः चन्द्रः ।

मित्रं च मन्त्री च सुहृत्प्रियश्च विद्यावयःशीलगुणैः समानः।
बभूव भूपस्य स तस्य विप्रो विश्वंभराभारसहः सहायः॥ ३८॥
अपि च।
ब्रह्मण्योऽपि ब्रह्मवित्तापहारी स्त्रीयुक्तोऽपि प्रायशो विप्रयुक्तः।
सद्द्वेषोऽपि द्वेषनिर्मुक्तचेताः को वा तादृग्दृश्यते श्रूयते वा॥ ३९॥

सकलाः कलाः विद्याः एव अङ्कुराः प्ररोहास्तेषां कलापस्य समूहस्य कन्दः मूलं। समस्तानां पुरुषगुणानामेव मणीनां सागरः। चपलायाः चञ्चलायाः राज्यलक्ष्म्याः एव करेणुकायाः इभ्याः आलानस्तंभः गजबन्धनस्तभः। सकलभुवनव्यापारएव पारावारनौः सागरस्थितः प्लवः तस्याः कर्णधारः नाविकः। सुधांभोनिधेः अमृतसागरस्य डिण्डीरपिण्डवत्पाण्डुराणि शुभ्राणि यशांसि कुशेशयानि तामरसानीव तेषां खण्डैः मण्डितः भूषितः सकलः ससारः प्रपञ्चः सरः तटाकमिव यस्यतथोक्तः (अत्रोपमा) पूर्वेषुविशेषणेषु अश्लिष्टपरंपरितरूपकं। रागः प्रीतिः तेनसहिताः कृताः सरागीकृताः समस्तपार्थिवास्तान् अनुजीवतिताच्छील्येन यद्वा ते अनुजीविनोयस्यतथोक्तः। (तस्यनलस्य) जीवितसमः जीवतुल्यः। (तस्य) प्राणैः असुभिः सम। (तस्य) हृदयेन मनसा सम। (तस्य) शरीरमात्रेण भिन्नः अतएव द्वितीयः यद्वा अद्वितीय: एकः आत्मा अन्तरात्मेव। (तस्य) कुलक्रमादागतः '(तस्य) सुखदुःखयोः सक्रान्तौ संक्रमणे दर्पणः आदर्शः। स्वभावानुरक्तः। निष्कारणप्रीतिमान्। शुचिः शुद्धः। सत्येन पूता पवित्रा वाक् यस्यतथोक्तः। कृतज्ञः उपकारवेदी।

३८. **मित्रमिति**। सः विप्रः द्विज श्रुतशीलः तस्य भूपस्य मित्रं स्निग्धः। मन्त्री सचिवः शोभन हृत् मनः यस्यसः सुहृत् सुष्ठुहृदय यस्यसः सुहृदितिविगृह्यमाणे 'सुहृद्दुर्हृदौमित्रामित्रयोः' इतिनिपातनात् मित्रमितिव्यर्थेस्यात्। प्रीणातीतिप्रियः प्रीतिमान् विद्यया वयसा शीलेन आचारेण गुणेन दयादाक्षिण्यादिनाच समानः सदृशः। सहत इति सह विश्वंभराया भुवः भारे भरणे सहः क्षमः सहायः अनुचरश्च बभूव। अत्र पूर्वार्धे इन्द्रवज्रावृत्तं 'स्यादिन्द्रवज्रातजास्ततोगौ' इतिलक्षणात् उत्तरार्धेतु उपेन्द्रवज्रा लक्षणमुक्तंप्राक्॥

३९. **ब्रह्मण्य इति**। ब्रह्मणे ब्राह्मणाय हितोपि ब्रह्मणः वित्तं धनं ताच्छील्येनापहरतीति तथोक्तः (इति विरोधः) ब्रह्म वेत्तीति ब्रह्मवित् तांपहारीच (इति परिहारः) एवमुत्तरत्रापि स्त्रीभिर्युक्तोपि प्रायशः बाहुल्येन 'बह्वल्पार्थात्' इति शस्। विप्रयुक्तः स्त्रीविरहितः विप्रैर्युक्तश्च। सत्सु साधुषु द्वेषः यस्य तथोक्तोपि सिद्धान्ते सन् समीचीनः वेषः प्रसाधनं यस्य तथोक्तः। द्वेषेण निर्मुक्तं रहितं चेतः मनः

३२. अथ स पार्थिवस्तस्मिन्नमात्ये परिजनपरिवृढे प्रौढप्रेमणि निगूढमन्त्रे मन्त्रिणि तृणीकृतस्त्रैणविषयरसे सौराज्यरागजनने जननीयमाने जनस्य, सर्वोपधाशुद्धबुद्धौ निधाय राज्यप्राज्यचिन्ताभारमभिनवयौवनारम्भरमणीये रम्यरमणीजननयनहृदयप्रिये प्रियंगुभासि जितमदनमहस्यपहासितसुरासुरसौभाग्ययशसि विस्मापितसमस्तजनमनसि लसल्लावण्यपुञ्जपराजितसकलसमुद्राम्भसि कान्तिकटाक्षितचन्द्रमसि वयसि वर्तमानो मानितमानिनीजनयौवनसर्वस्वः स्वयमनवरतं सकलसंसारसुखसंदोहमन्वभूत् ॥

यस्य तथोक्तः । स इव दृश्यते इति तादृक् नृपतुल्यः मन्त्रितुल्योवा कोवापुरुषः दृश्यते श्रूयतेवा । विरोधाभासालङ्कारः । पादत्रये व्यवहितम्मिश्रमादिमध्यभागयमकं शब्दालङ्कारश्च । शालिनीवृत्तम् 'शालिन्युक्ताम्तौतगौगोऽब्धिलोकैः' इति लक्षणात् ॥

32. **अथेति** । सः पार्थिवः नलः अमात्ये अमा सह भवे वर्तमाने परिजनानां परिवृढे श्रेष्ठे 'प्रभौ परिवृढः' इति निपातः । प्रौढं वृद्धं प्रेम प्रीतिर्यस्य तथोक्ते । निगूढः संवृतः मन्त्रः गुह्यवादः येन तथोक्ते । अतृणं तृणं सम्पद्यमानः कृतः तृणीकृतः स्त्रीणामयं स्त्रैणः यः विषयः शब्दादिः सएव रसः स्वादः येन तथोक्ते । सुराज्ञः भावः सौराज्यं तस्मिन् रागः (जनानां) प्रीतिः तस्य जननं यस्मात् तथोक्ते । अतएव जनस्य जननी मातेवाचरन् जननीयमानस्तस्मिन् 'कर्तुः क्यङ्' इत्यादिना क्यङ् तदन्ताच्छानच् । सर्वाः याः उपधाः धर्मार्थकामभयैः परीक्षणानि 'उपधाधर्माद्यैर्यत्परीक्षणं' इत्यमरः । ताभिः शुद्धा बुद्धिर्यस्यतथोक्ते । तस्मिन्मन्त्रिणि श्रुतशीले । राज्यस्य प्राज्या अधिका या चिन्ता सैव भारस्तं निधाय निक्षिप्य । अभिनवस्य नूतनस्य यौवनस्य तारुण्यस्य आरम्भेण रमणीये रम्ये रम्याणां रमणीजनानां स्त्रीजनानां नयनयोः हृदयस्यच प्रिये प्रियंगोः फलिन्याः भाइवभाः कान्तिर्यस्मिन् तथोक्ते । जितं मदनस्य कामस्य महस्तेजः यस्मिंस्तथोक्ते । अपहसितं अवमतं सुरासुराणां सौभाग्यस्य सौन्दर्यस्य यशः यस्मिंस्तथोक्ते । विस्मापितानि साश्चर्याणिकारितानि समस्तजनानां मनांसि येनतथोक्ते । लसतः चञ्चलस्य प्रकाशमानस्यवा लावण्यस्य कान्तिविशेषस्य पुञ्जेन समूहेन पराजितं परिभूतं सकलसमुद्राणां अंभः जलं यस्मिं स्तथोक्ते । कान्त्याश्रिया कटाक्षः अपाङ्गेन दर्शनं तद्वान् कृतः कटाक्षितः विलोकितः तुल्य इति यावत् (अत एव प्रतीपालंकारः 'प्रतीपमुपमानस्योपमेयत्वप्रकल्पनम्' इति) चन्द्रमाः यस्मिं स्तथोक्ते । वयसि वर्त-

३३. कदाचिदनुत्पन्नविषमरणभयो गरुड इवाहितापकारी हरिवाहनविलासमकरोत् ॥

३४. कदाचिच्चन्द्रमौलिरिव मदनबाणासनातिमुक्तशरसंछादितायां पर्वतभुवि विजहार ॥

३५. कदाचिदच्युत इव शिशिरकमलाकरावगाहनोत्पन्नपुलककोरकिततनुरनन्तभोगभाक्सुखमन्वतिष्ठत् ॥

३६. कदाचिन्नलिनयोनिरिव राजसभावस्थितः प्रजाव्यापारमचिन्तयत् ॥

३७. कदाचिन्मयूर इव कान्तोन्नतपयोधरमण्डलीविलासेन हर्षमभजत् ॥

मानः मानितं सभावितं मानिनीजनानां मानयुक्तस्त्रीजनानां यौवनमेव सर्वस्वं धनं येनतथोक्तस्सन् । स्वयं अनवरत सदा सकलं समस्तं संसारसुखानां प्रपञ्चविषयसौख्यानां सन्दोहं पुञ्जं । अन्वभूत् । अनुभवति स्म ॥

33. **कदाचिदिति** । (सः नलः) गरुडः वैनतेयइव अनुत्पन्नं अजातं विषमात् विरुद्धात् रणाद्युद्धात् भयं विषात् मरणभयञ्च यस्यतथोक्तः । अहितानां शत्रूणां अपकारी अहीनां सर्पाणां तापकारीचसन् हरिः अश्वः तस्य वाहनं बाह्यालीप्रवहणं हरेर्विष्णोः वाहनं यानञ्च तस्य विलासं लीलां । अकरोत् अत्रश्लिष्टोपमा अहेः वृत्रस्य तापकारी हरिवाहनस्य इन्द्रस्येतिध्वन्यते ॥

34. **कदाचिदिति** । चन्द्रमौलिः शिव इव । मदनः मरुवकः बाणः नीलझिण्टी असनः बन्धूकः अतिमुक्तः पुण्ड्रकः शरः तेजनकः एतैर्वृक्षैः मदनस्य कामस्य बाणासनाच्चापात् अत्यन्तं मुक्तैः शरैः बाणैश्च संछादितायां स्थगितायां । पर्वतभुवि गिरिप्रदेशे पार्वत्याञ्च विजहार विहृतवान् । पूर्ववदलंकारः एव मुत्तरत्रापि ॥

35. **कदाचिदिति** । अच्युतः विष्णुरिव । शिशिरे शीतले कमलाकरे पद्मसरसि अवगाहनं स्नानं शिशिरेण कमलायाः श्रियाः करेण पाणिना अवगाहनं ग्रहणञ्च तेन उत्पन्नैः जातैः पुलकैः रोमाञ्चैः कोरकिता मुकुलिता तनुः शरीरं यस्यतथोक्तः । अनन्तं अपरिमितं भोगं सुखं अनन्तस्य आदिशेषस्य भोगं शरीरञ्च भजतीति तथोक्तश्चन् सुख अन्वतिष्ठत् अनुबभूव यद्वा सुखं यथा तथा अवर्तत ॥

36. **कदाचिदिति** । नलिनयोनिः धातेव । राज्ञः सभायां अवस्थितः तिष्ठन् रजसा रजोगुणेन निर्वृत्ते राजसे भावे वृत्तौ आस्थितः वर्तमानश्च । प्रजानां व्यापारं व्यवहारं निर्माणश्च । अचिन्तयत् ॥

37. **कदाचिदिति** । मयूरः केकीव । कान्तायाः अंगनायाः उन्नतयोः उन्नतयोः पयोधरयोः स्तनयोः मण्डल्यां देशे विलासेन उपभोगेन कान्तायाः कमनी-

38. कदाचिन्नक्षत्रराशिरिवाश्विन्या सेनया समन्वितो मृगानुसारी बहुश-ष्पवनमार्गं बभ्राम ॥

39. कदाचिदाञ्जनेय इवाक्षविनोदमन्वतिष्ठत् ॥

40. कदाचिद्वानरेश्वर इव सुग्रीवो वैदेहीति ब्रुवाणस्यालघुकाकुस्थस्या-र्थिनः प्रार्थना क्रियतां सफलेति वानरपुंगवानादिदेश ॥

41. कदाचिन्मकरकेतन इव सुमनसो मार्गणान्विधाय स्वगुणं कर्ण-पूरीचकार ॥

यायाः उन्नमतां पयोधराणां मेघानां मण्डल्याः समूहस्य विलासेन स्फुरणेनच । हर्षं अभजत् जहर्ष ॥

38. **कदाचिदिति** । नक्षत्राणां ताराणां राशिः सघ इव अश्विन्या अश्व-वत्या सेनया सैन्येन सेनया इनेन रविणा सहितया आश्विन्या अश्विनीनक्षत्रेणच समन्वितः युक्तः मृगान् श्वापदान् मृगं मृगशीर्षनक्षत्रञ्च अनुगन्तु शीलवांश्वसन् । बहूनि शष्पाणि बालतृणानि यस्मिंस्तथोक्तं वनमार्गं पक्षे बहुशः पवनमार्गः द्यौः तञ्च ( प्राप्य ) बभ्राम अभ्रमत् बहुशः पवनेत्यत्र पकारात् प्राक् विसर्गः उपध्मा-नीयोवा शष्पेत्यत्रतु षकार एव । तदेवं रूपभेदेपि श्रुतिसाम्यान्नदोष इति कवि-समयः ॥

39. **कदाचिदिति** । आञ्जनेय. हनुमानिव अक्षैः पाशकैः विनोदं क्रीडां अक्षस्य रावणकुमारस्य विनोदं वधञ्च अन्वतिष्ठत् अकरोत् ॥

40. **कदाचिदिति** । वानरेश्वरः सूर्यतनय इव । सुग्रीवः शोभना ग्रीवा कण्ठः यस्यतथोक्तः तदाख्यश्च । वै स्फुटार्थे ( मह्यं ) देहि प्रयच्छ इति वैदेहि सी-ते इति च ब्रुवाणस्य वदतः आ समन्तात् लघ्व्यां काकौ ( याच्नावशात् ) भिन्नक-ण्ठध्वनौ तिष्ठतः अन्यत्र अलघोः गुरोः काकुत्स्थस्य रामस्य अर्थिनः याचकस्य रामविशेषणत्वे सप्रयोजनस्येत्यर्थः प्रार्थना सफला क्रियतां इति वा इत्येव ' वास्याद्विकल्पोपमयोरेवार्थेच समुच्चये ' इत्यमरः । नरपुंगवान् नरश्रेष्ठान् अन्यत्र वानरपुंगवान् हरिश्रेष्ठान् आदिदेश आदिष्टवान् ॥

41. **कदाचिदिति** । मकरकेतनः मन्मथ इव । मार्गणान् याचकान् सु-मनसः प्रार्थितार्थदानेन सौमनस्ययुक्तान् पक्षे सुमनसः पुष्पाणि । मार्गणान् बा-णान् विधाय कृत्वा । स्वस्य गुणं त्यागगुणं ज्याञ्च । कर्णौ (जगतः) श्रोत्रे पूर्येते अनेनेति कर्णपूरः पक्षे कर्णं स्वस्य कर्णसमीपदेशं पूरयति कर्षणेन व्याप्नोतीति कर्णपूरः अकर्णपूरं कर्णपूरं सम्पद्यमानञ्चकार कर्णपूरीचकार ॥

42. कदाचिदम्भोनिधिरिवोच्चैःस्तननाभिरम्याः,कृतानिमेषनयनविभ्रमाः, सकंदर्पाः, सिषेवे वेलाविलासिनीः ॥

43. कदाचिद्दशरथ इवायोध्यायां पुरि स्थितः सुमित्रोपेतो रममाण रामभरतप्रेक्षणेन क्षणमाह्लादमन्वभूत् ॥

44. एवमस्य सकलजीवलोकसुखसंतानमनुभवतो यान्ति दिनानि ॥

45. अथ कदाचिदुन्नमत्पयोधरान्तरपतद्धारावलीविराजिताः, कमलदलकान्तनयनाः, सुरचापचक्रवक्रभ्रुवः, विद्युन्मणिमेखलालंकारधारिण्यः, शिञ्जानामुक्तकलहंसकाः, प्रौढकरेणुसंचारहारिण्यः, कम्रकंधराः, तिरस्कृतशशाङ्ककान्तिकलापोच्चमुखमण्डलाः, सकलजगज्जेगीयमानगुणामिममनुपमरूपलावण्यराशिराजितं राजानमवलोकयितुमिवावतरान्ति स्म वर्षाः ॥

42. **कदाचिदिति** । अम्भोनिधिः समुद्र इव । उच्चैः उन्नताभ्यां स्तनाभ्यां नाभ्याच रम्याः उच्चैः स्तननेन शब्देन अभिरम्याश्च । कृत: आनिमेषयोः निमेष रहितयोः नयनयोः नेत्रयोः विभ्रमः लीला याभिस्तथोक्ताः कृत आनिमेषाणां मीनानां नयनं प्रापणं याभिस्तथोक्ताश्च । सकन्दर्पाः सकामाः कज्जलं तस्य दर्पेण मोक्षणेन सहिताश्च । (दर्पमोचनार्थत्वात्) वेलायां वारके विलसन्ति भोगायोपतिष्ठन्त इत्येवंशीलाः वारस्त्रीः पक्षे विलसन्ति प्रकाशन्ते अभीक्ष्णमिति विलासिन्यः ताः वेलाः अंभोवृद्धीः कूलानिवा सिषेवे सेवितवान् ॥

43. **कदाचिदिति** । दशरथ इव अयोध्यायां न योद्धु शक्या तदाख्याच तस्यां । पुरि नगरे स्थितः । सुमित्रैः सुमित्रयाच उपेतः । रममाणाः विलसन्त्यः रामाः स्त्रियः यत्र तथाभूतेन भरतप्रेक्षणेन भरताभिनयेन रममाणयोः क्रीडतोः रामभरतयोः प्रेक्षणेन दर्शनेनच । क्षणं मुहूर्तं । 'कालाध्वनोः' इति द्वितीया । आह्लादं मुदं अन्वभूत् ॥

44. **एवमिति । जीवलोकाः** । प्राणिनः । **सन्तानं** । समूहं । **यान्ति** गच्छन्ति ॥

45. **अथेति** । अथ कदाचित् सकलजगद्भिः पुनः पुनः गीयमानः जेगीयमानः गुणः यस्य तथोक्तं । अनुपमं असदृशं यत् रूपयति विमोहयतीति रूपं शरीरं तस्यलावण्यस्य कान्तिविशेषस्य राशिभिः पुञ्जैः राजितं शोभितं । इमं राजानं नलं अवलोकयितुं द्रष्टुमिव अत्रोत्प्रेक्षा वर्षाः वर्षं वर्षणमत्रास्तीति वर्षाः प्रावृट् वर्षाशब्दगतस्त्रीत्वबोधिताः स्त्रियश्च । वर्षाशब्दः प्रावृडर्थे स्त्रीलिङ्गः नित्यबहुवचना-

यत्र च ।

आकर्ण्य स्मरयौवराज्यपटहं जीमूतनूत्नध्वनिं
नृत्यत्केकिकुटुम्बकस्य दधतं मन्द्रां मृदङ्गक्रियाम् ।
उन्मीलन्नवनीलकन्दलदलव्याजेन रोमाञ्चिता
हर्षेणेव समुच्छ्रितान् वसुमती दध्रे शिलीन्ध्रध्वजान् ॥ ४० ॥

न्तश्च । अवतरन्तिस्म अवतीर्णाः आविर्भूताः उभयीर्वर्षाः विशिनष्टि । **उन्नमदित्यादिना** । उन्नमतां पयोधराणां मेघानां पयोधरयोः स्तनयोश्च अन्तरान्मध्यात् अन्तरेच पतन्तीभिः धाराणां वर्षधाराणां हाराणां मुक्तासराणाञ्च आवलीभिः यद्वा स्त्रीपक्षे अन्तः मध्ये अपतन्तीभि र्हारावलीभिश्च विराजिताः यद्वा उन्नमत्पयोधरान्तरपतद्धाराः वलीभिरुदरलेखाभिः विराजिताश्चास्त्रियः । कमलदलानां कान्तामिष्टं नयनं अतिवाहनं यासान्तथोक्ताः । वर्षातिवाहनेहि कमलानामुल्लासः । पक्षे कमलदलवत्कमनीयनेत्राः । सुरस्य इन्द्रस्य चापचक्रं धनुर्मण्डलमेव वक्रे कुटिले भ्रुवौ यासां पक्षे इन्द्रचापवद्वक्रभ्रुवः । विद्युत् तडिदेव मणिमेखला रत्नरशना तां अलं अत्यर्थं कस्य जलस्य अरं वेगञ्च धारयन्तीति तथोक्ताः पक्षे विद्योतमानमणिकाञ्चीभूषणधारिण्यः । शिञ्जानाः गर्जन्त्यः मुक्ताः त्यक्ताः कलहंसाः याभिस्ताः (तदा हंसानाम्मानसेगमनात्) पक्षे शिञ्जाने शब्दायमाने आमुक्ते बद्धे हंसके चरणाभरणे यासान्तथोक्ताः । प्रकर्षेण ऊढं कं जलं तेन रेणूनां रजसां सञ्चार हरन्तीत्येवशीलाः पक्षे प्रौढेन प्रगल्भेन करेण्वाः इभ्या इव सञ्चारेण हारिण्यः रम्याः । धरन्तीति धराः कंजलंतस्य धराः कन्धरा मेघाः कम्राः रम्याः कन्धराः मेघाः यासु कम्रा कन्धरा कण्ठः यासाञ्च । तिरस्कृता आच्छादिता शशांकस्य चन्द्रस्य कान्तिर्यासुताः कंजलं लपतीति कलापं जलवृद्धिक्षयभाषणतत्परं उच्चं मेघालोकनाय उन्नमितं मुखं येषान्तथोक्ताः मण्डलाः (लक्षणया) देशजनाः यासुतथोक्ताश्च । पक्षे तिरस्कृताः अभिभूताः शशांकस्य कान्तिकलापाः शोभासमूहाः येनतथोक्तं उच्चं उत्कृष्टं मुखमण्डलं आननबिंबं यासां तथोक्ताः । अत्र समासोक्त्यलंकारः 'समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्यचेत्' इति लक्षणात् ॥

४०. **आकर्ण्येति** । युवाचासौ राजाच युवराजस्तस्यकर्मभावोवा यौवराज्यं स्मरस्य कामस्य यौवराज्यस्य पटहं आनकं नृत्यतां केकिनां मयूराणां कुटुंबकस्य पुत्रादिसन्तानस्य मन्द्रां गम्भीरां मृदङ्गस्य मुरजस्य क्रियां वादनकर्म दधत धारयन्तं जीमूतस्य मेघस्य कस्यचिन्नायकस्येतिध्वन्यते नूत्नं नवं ध्वनिं आकर्ण्य श्रुत्वा हर्षेण सन्तोषेणेव उन्मीलतां उत्पद्यमानानां नवानां नूतनानां नीलानां श्यामानां कन्दलदलानां कदलीपत्राणां व्याजेन मिषेण रोमाञ्चिता पुलकिता वसुमती भूः काचित् स्त्रीचेतिध्वन्यते समुच्छ्रितान् समुन्नतान् शिलीन्ध्रान् छत्राकानेव ध्वजान् के-

आपिच ।

पर्णैः कर्णपुटायितैर्नवरसप्राग्भारविस्फारितैः
श्रृण्वन्तो मधुरं द्युमण्डलमिलन्मेघावलीगर्जितम् ।
शाखाग्रग्रथमानसौरभभरभ्रान्तालिपालिध्वजा-
 िव वहन्ति पुष्पपुलकं धाराकदम्बद्रुमाः ॥ ४१ ॥

अथ क्रमेण

नीरं नीरजनिर्मुक्तं नीरजस्कं भुवस्तलम् ॥
जातं जातिलतापुष्पगन्धान्धमधुपं वनम् ॥ ४२ ॥

अपिच ।

धुतकदम्बकदम्बकनिष्पतन्नवपरागपरागममन्थराः ।
हृततुषारतुषा रतिरागिणां प्रियतमा मरुतो मरुतो ववुः ॥ ४३॥

तून् दध्रे धृतवती । अत्र 'कैतवापह्नुतिर्व्यक्तौव्याजाद्यैर्निह्नुतेः पदैः' इत्युक्तलक्षणायाः कैतवापह्नुतेः उत्प्रेक्षायाः 'परिणामःक्रियार्थश्चेद्विषयीविषयात्मना' इत्युक्तलक्षणस्यपरिणामस्यचसंसृष्टिः वृत्तं शार्दूलविक्रीडितम् ॥

४१. **पर्णैरिति** । नवस्य नूतनस्य रसस्य जलस्य रागस्यच प्राग्भारेण अतिशयेन विस्फारितैः विवृद्धैः कर्णपुटवत् श्रोत्रसंपुटवदाचरितैः पर्णैः पत्रैः मधुरं रुचिरं दिवः आकाशस्य (स्वर्गस्यच) मण्डले प्रदेशे (मण्डलादेशाच्च) मिलन्त्याः संगच्छमानायाः मेघावलेः मेघपङ्क्तेः (कस्याश्चित्स्त्रियाश्च) गर्जितं गर्जनं श्रृण्वन्तः शाखाग्रे ग्रथमानानां मिलतां सौरभभरेण वासनाभारेण भ्रान्तानां अटतां अलीनां भृङ्गाणां पालिः पङ्क्तिरेव ध्वजः येषान्तथोक्ताः धाराकदम्बद्रुमाः ये वसन्ते पुष्प्यन्तितेधूलीकदम्बाः वर्षासुच धाराकदम्बाः तदाख्याद्रुमाः तोषेण हर्षेणेव पुष्पमेव पुलकं रोमाञ्चं वहन्ति । अत्र उपमारूपकोत्प्रेक्षाणां संसृष्टिः । वृत्तं पूर्ववत् ॥

४२. **नीरमिति** । नीरं जलं नीरजैः पद्मैः निर्मुक्तं जातं भुवः तलं नीरजस्कं धूलिरहितं जातं वनं जातिलतायाः मालतीवल्ल्याः पुष्पाणां गन्धेन अन्धाः तृप्ता इत्यर्थः मधुपाः भृङ्गाः यस्मिंस्तथोक्तं जातं । अत्र यमकाख्यश्शब्दालङ्कारः ॥

४३. **धुतेति** । धुतानां कम्पितानां कदम्बानां नीपानां कदम्बकात्समूहात् निष्पततां नवानां परागाणां पुष्परजसां परागमेन उत्कृष्टमेलनेन मन्थराः मन्दाः (एतेनसौरभ्यं मान्द्यञ्चकथितं) हृताः ऊढाः तुषारतुषाः शीकरकणाः यैस्तथोक्ताः (एतेनशैत्यं उक्तं) रतौ सुरते रागिणां इच्छावतां प्रियतमाः अत्यन्तमिष्टाः मरुतः वायवः मरुतः मरोः पर्वतात् 'पञ्चम्यास्तसिल्' इति मरुशब्दात्तसिल् । ववुः वह-

46. ततश्च । तिरस्कृततरणित्विषि, विगलद्वारिविप्रुषि, शान्तचातकतृषि, निर्वाणवारणवपुषि, मानिनीमानग्रहग्रन्थिमुषि, जनितयवासकशुषि, विधववधूविद्विषि, वर्धितमण्डूकहृषि, मुद्रितचन्द्रमसि, विद्राणपङ्कजसरसि, स्वाधीनप्रियप्रेयसि, प्रोषितकलहंसवयसि, नष्टनक्षत्रमण्डलमहसि, मेचकितनभसि निष्पतन्नीपरजसि, स्फुटकुटजरजःपुञ्जपिञ्जरिताष्टदिग्भासि भासुरसुरचापचक्रभृति, मयूरमदकृति, महिषशोषहृति विस्तरत्सरिति, शाद्वलहरिति, विद्योतमानविद्युति, वहन्मन्दमेघंकरमरुति, हृष्यत्कृषाणयोषिति, पुष्प्यत्केतकीगन्धपानमत्तमधुकृति, प्रोद्भूतभूरुहि, दरिद्रनिद्राद्रुहि, सगर्वगोदुहि, कदम्बस्तम्बालम्बिमधुलिहि, मुदि-

न्तिस्स । अत्र पादचतुष्टयेपि अव्यवहितम्मिश्रं मध्यभागयमकं । वृत्तं द्रुतविलम्बितं । तल्लक्षणन्तु 'द्रुतविलम्बितमाह नभौ भरौ' इति ॥

46. **ततश्चेति** । तिरस्कृताः तिरोहिताः तरणेस्सूर्यस्य त्विषः दीप्तयः येन तथोक्ते । विशेषेणगलन्त्यः वारीणां विप्रुषः बिन्दवः यस्मिंस्तथोक्ते । शान्ता चातकस्य तोककस्य तृट् पिपासा यस्मिंस्तथोक्ते । निर्वाणं निर्वृतिर्मज्जनंवा 'निर्वाणमस्तंगमनेनिर्वृतौगजमज्जने । संगमेप्यपवर्गेच' इति मेदिनी । तद्युक्तं वारणस्य गजस्य वपुश्शरीरं यस्मिंस्तथोक्ते । मानिनीनां मानवतीनां मानस्य गर्वस्य ग्रहं ग्रहणमेव ग्रन्थिं बन्धनं मुष्णाति हरतीति तथोक्ते । जानितः उत्पादितः यवासकस्य कच्छुरायाः (काञ्जोरीतिद्राविडप्रसिद्धस्य) शुट्शोषणं यस्मिंस्तथोक्ते । विधवानां विरहितपीतनां वधूनां स्त्रीणां विद्विषिशत्रौ । वर्धितः मण्डूकानां भेकानां हृट् सन्तोषः यस्मिंस्तथोक्ते । मुद्रितः तिरोहितः चन्द्रमाः यस्मिंस्तथोक्ते । विद्राणानि भीतानि तिरोहितानीत्यर्थ. पंकजानि पद्मानि यस्मिंस्तथोक्तं सरस्तटाकः यस्मिंस्तथोक्ते । स्वाधीनौ स्वायत्तौ प्रियाच प्रियश्चप्रियौ (आतिशयेनप्रिया) प्रेयसीच (आतिशयेनप्रियः) प्रेयांश्च प्रेयांसौ यस्मिंस्तथोक्ते । प्रोषितानि मानसं प्रस्थितानि कलहंसवयांसि हंसपक्षिणः यस्मिंस्तथोक्ते । नष्टं नक्षत्राणां मण्डलस्य बिंबस्य समूहस्यवा महस्तेजः यस्मिंस्तथोक्ते । मेचकितं श्यामलितं नभः आकाशं यस्मिंस्तथोक्ते । निष्पतन्ति नीपानां कदबपुष्पाणां रजांसिरेणवः यस्मिंस्तथोक्ते । स्फुटानां फुल्लानां कुटजानां गिरिमल्लिकानां रजसां पुंजेन समूहेन पिञ्जरिताः पीतवर्णवत्यः कृताः अष्टदिशां भासः कान्तयः यस्मिंस्तथोक्ते । भासुरस्य प्रकाशमानस्य सुरचापस्य इन्द्रधनुषः चक्रं मण्डलं बिभ्रतीति तथोक्ते । मयूराणां मदं हर्षं गर्वंवा 'मदोरेतासिकस्तूर्यां गर्वेहर्षेभदानयोः' इति मेदिनी । कृतवति ।

तमदनाट्टहासायमानघननादमुचि, पच्यमानजम्बूफलश्यामलितवनान्तररुचि, रचितपान्थसार्थशुचि, श्रूयमाणमदमधुरमयूरवाचि, विनिद्रकोशातकीशालिनि, यूथिकाजालिनि, नवमालिकामालिनि, कन्दलभाजि, पच्यमानजम्बूतरुवनराजिभ्राजि, भिक्षाक्षणक्षपितपरिव्राजि, शान्तसारङ्गरुजि, नीडनिर्माणाकुलबलिभुजि, सान्द्रेन्द्रगोपयुजि, श्च्योतत्तमालधारागृहसदृशि, श्यामायमानदशदिशि, दिवापि श्रूयमाणरजनिशङ्काकुलचक्रवाकचक्रक्रुशि, शकटसंचाररुधि, पल्लवितवीरुधि, विश्रान्तजिष्णुक्ष्मा-

महिषाणां शोषं तापं हृतवति । विस्तरन्त्यः विस्तारंगच्छन्त्यः सरितः नद्यः यस्मिंस्तथोक्ते । ननु 'स्तृञ्आच्छादने' इत्यस्यक्र्यादित्वात् विस्तृणत्सारितीति वाच्यमितिचेत् सत्यं 'बहुलमेतन्निदर्शनं' इति बहुलग्रहणेन नवगणीपठितेभ्योपिक्वचित्स्वार्थेणिजित्युक्तत्वात् विस्तारयदित्यस्य चिन्तेतिपठितव्ये 'चितिस्मृत्यां'' इत्यत्रेदितग्रहणं णिचः पाक्षिकत्वे लिङ्गमित्युक्तत्वात् विस्तरादित्यस्यच सिद्धिरित्यलं शब्दशास्त्रपारावारविलोडनेन । शाद्वलाः बालतृणैर्हरिताः हरितः दिशः यस्मिंस्तथोक्ते । विशेषेण द्योतमानाः विद्युतः तडितः यस्मिन् । वहन्तः वान्तः मन्दाः मेघं कुर्वन्तीति मेघंकराश्च 'मेघर्तिभयेषुकृञः' इतिखच् । मरुतः वाताः यस्मिन् । हृष्यन्त्यः कृषाणानां कृषीवलानां योषितः स्त्रियः यास्मिन् । पुष्यन्तीनां विकसन्तीनां केतकीनां गन्धस्य पानेन मत्ताः मधुकृतः भ्रमराः यास्मिन् । प्रकर्षेण उद्भूताः उत्पन्नाः भूरुहः वृक्षाः यास्मिन् । दरिद्राणां निद्रायै द्रुह्यनीति दरिद्रनिद्राध्रुक् तास्मिन् । सगर्वाः गोदुहः गोपाः यास्मिन् कदंबानां नीपानां स्तंबेषु गुच्छेषु 'स्तंबेगुल्मेतुणादीनामकाण्डद्रुमगुच्छयोः' इति । आलंबनशीलाः मधुलिहः भृंगायस्मिन् मुदितस्य तुष्टस्य मदनस्य कामस्य अट्टहासः वीररौद्ररससञ्जातहास इवाचरन् अट्टहासायमानः यो घनस्य मेघस्य नादः तम्मुक्तवति । पच्यमानैः परिपाकं प्राप्नुवद्भिः ॥ कर्मकर्तरिलटश्शानच् ॥ जंबूफलैः श्यामलिता वनान्तरस्य वनमध्यस्य रुक्कान्तिर्यस्मिन् । रचिताकलिता पन्थानं नित्यं गच्छन्तीति पान्थाः पथिकाः तेषां सार्थस्य संघस्य शुक्व्यसनं येनतथोक्ते । श्रूयमाणा मदेन हर्षेण मधुरा रुचिरा मयूराणां वाक् केकाध्वनिः यास्मिन् । विनिद्राभिः विकसिताभिः कोशातकीभिःपटोलीभिः शालते शोभते इति तच्छीले । यूथिकानां गणिकाख्यपुष्पविशेषाणां जालं समूहः तदस्मिन्नस्तीतितथोक्ते । नवमालिकानां सप्तलानां पङ्क्तिः सास्मिन्नस्तीतितथोक्ते । कन्दलान् नवांकुरान् भजतीति तथोक्ते । पच्यमानानां जंबूतरुवनानां राज्या पङ्क्त्या भ्राजते शोभत इति तथोक्ते । भिक्षाक्षणे भिक्षावसरे क्षपिताः (सुभिक्षत्वात्) भागहारिणः परिव्राजः सन्यासिनः यस्मिन् । शान्ता सारंगाणां चातकानां रुक्

पालयुधि, क्षीणोक्षक्षुधि, क्षीरसमुद्रनिद्राणबाणबाहुच्छिदि, सिन्धुरोधोभिदि, दवदहननुदि, विरहिमनस्तुदि, जनितजनमुदि, तापिच्छच्छायानुच्छेदिनि, छन्नकुटीमध्यबध्यमानवाजिनि, विकसितवकुलवनविराजिनि, सीरसीमन्तितग्रामसीमनि, विजयमानमनोजन्मनि जाते जगज्जीविनि, जीमूतसमये कदाचिदनम्भासि दिवसे मृगयावनपालकः प्रविश्य राजानं विज्ञापयामास ॥

पिपासाजनितरोगः यस्मिन् । नीडनिर्माणाकुलाः कुलायकरणव्यग्राः बलिभुजः काकाः यस्मिन् । सान्द्रः निबिडः इन्द्रगोपानां तितिभाख्यक्षुद्रजन्तूनां युक् योगः यस्मिन् । श्च्योतत् क्षरत् तमालानां तापिञ्छानां यत् धारागृहं तस्य सद्दशि समाने । श्यामाइवाचरन्तीति श्यामायमानाः दशदिशः यस्मिन् अत एव । दिवापि अहन्यपि । श्रूयमाणः रजनिः रात्रिरिति शंकया सन्देहेन आकुलानां चक्रवाकाणां चक्रस्य समूहस्य कुक् विरहजनित आक्रोशः यस्मिन् । शकटानां अनसां सञ्चारं रुणद्धीति तथोक्ते । पल्लविताः सञ्जातकिसलयाः वीरुधः लताः यस्मिन् । विश्रान्ता निवृत्ता जिष्णूनां जयशीलानां क्ष्मापालानां राज्ञां युत् युद्धं यस्मिन् । क्षीणा विनष्टा उक्ष्णां वृषभाणां क्षुत् बुभुक्षा यस्मिन् । क्षीरसमुद्रे निद्राणः निद्रांगतः (वर्षासु हरिर्निद्रातीति शास्त्रादिति भाव·) बाणस्य तदाख्यासुरस्य बाहुच्छित् विष्णुर्यस्मिन्। सिन्धूनां नदीनां रोधांसि तीराणि भिनत्तीति तथोक्ते । दवदहनं वनाग्निं नुदति नाशयतीति तथोक्ते । विरहिणां वियोगिनां मनः हृदयं तुदति व्यथयतीति तथोक्ते जनिता जनानां मुत् तुष्टिर्येन । तापिञ्छानां तमालानां छायां न उच्छिनत्ति ननिवारयतीति तच्छीले । छन्नायाः सावरणायाः कुट्याः कुटीरस्य मध्ये बध्यमानाः वाजिनः अश्वाः यस्मिन् । विकसितैः वकुलानां वञ्जुलानां वनैः विराजते शोभत इति तच्छेलि । सीरैः हलैः सीम्नः अन्तः सीमन्तः केशवेशः ' सीमन्तः केशवेशे ' इति शकन्ध्वादिगणसूत्रेणपररूपं । सीमन्तवत्कृताः सीमन्तिताः विभक्ताः कृष्टा इति यावत् ग्रामाणां सीमानः आघाटाः क्षेत्राणिवा यस्मिन् । ' सीमाघाटस्थिति क्षेत्रेष्वण्डकोशेपिंच स्त्रियाम् ' इति । विशेषेण जयन् विजयमानः ' विपराभ्यांजेः इति तङ् ततश्शानच् । मनसि जन्मयस्यसः मनोजन्मा कामः यस्मिन् । जगन्ति जीवयतीति तच्छीले । जीमूतानां मेघानां समये काले वर्षाकाले । जातेसति । कदाचित् अनंभसि जलवर्षरहिते दिवसे दिने । मृगयायै आखेटकाय (योग्यस्य) वनस्य पालकः । प्रविश्य राजानं नलं विज्ञापयामास निवेदितवान् ॥

"देव,

किं स्यादञ्जनपर्वतः स्फटिकयोर्द्वन्द्वं दधद्दीर्घयो-
रम्भोमेदुरमेघ एष किमुत श्लिष्यद्बलाकाद्वयः ।
शून्यः किंनु करेण कुञ्जर इति भ्रान्तिं समुत्पादय-
न्दंष्ट्राद्वन्द्वकरालकालवदनः कोलः कुतोऽप्यागतः ॥४४॥

ततश्चासौ

भिन्दन्कन्दकशेरुकन्दलभृतः स्निग्धप्रदेशान्भुवो
भञ्जन्नञ्जनशैलशृङ्गसदृशः फुल्लल्लतामण्डपान् ॥
मन्दं मन्दरलीलयाब्धिसदृशं मथ्नंश्च लीलासरः
क्रोडः क्रीडति भाययन्निव भवत्क्रीडावने रक्षकान्" ॥४५॥

४४. **किमिति** । एषः दीर्घयोः आयतयोः स्फटिकयोः स्फटिकरत्नयोः द्वन्द्वं द्वयं दधत् धारयन् अञ्जनपर्वतः कज्जलगिरिः स्यात् किं उत आहोस्वित् श्लिष्यत् आलिंगत् युक्तमितियावत् बलाकयोः बिसकण्ठिकयोः द्वय यस्मिंस्तथोक्तः । अम्भोभिः जलैः मेदुरः निबिडः मेघः किं करेण शुण्डया शून्यः रहितः कुञ्जरः गजः किंनु किंवा 'नुपृच्छायां विकल्पेच' इत्यमरः । इति भ्रान्तिं भ्रमं यद्वा अनवस्थितिं अनिश्चयं सन्देहमितियावत् । अतएवात्र भ्रान्तिमान्वा सन्देहोवालङ्कारः । समुत्पादयन् जनयन् दंष्ट्रयोः दन्तयोः द्वन्द्वेन करालं भीषण कालं श्यामञ्च वदनं मुखं यस्यतथोक्तः कोलः किरिः कुतोपि आगतः । शार्दूलविक्रीडितवृत्तम् ॥

४५. **भिन्दन्निति** । कन्दानां पद्ममूलानां सूरणानांवा कशेरूणां मुस्तानाञ्च कन्दलान् नवाङ्कुरान् बिभ्रतीति तथोक्तास्तान् भुवः भूमेः स्निग्धान् आर्द्रान् प्रदेशान् भिन्दन् दारयन् अञ्जनशैलस्य शृङ्गेण शिखरेण सदृशः समानः फुल्लन्तीनां विकसन्तीनां लतानां मण्डपान् भञ्जन् आमर्दयन् मन्दं स्वैरं यथातथा मन्दरस्य मन्दरपर्वतस्येव लीलया विलासेन अब्धिसदृशं सागरसमं लीलासरःक्रीडातटाकं मथ्नश्च विलोडयंश्च क्रोडः वराहः भवतः क्रीडावने रक्षकान् भाययन् भीतियुक्तान् कुर्वन्निव । इवेति वाक्यालङ्कारे । क्रीडति रमते । मन्दरलीलया भाययन्नित्यत्र करणाद्भयेन आत्मनेपदं आत्वं षुगागमश्च न हेतोश्चेद्भयं तदाभीषयमाणः भापयमान इति च स्यात् । द्रव्यादिसाधारणं निर्व्यापारसाधारणञ्चहेतुत्वं करणत्वन्तु क्रियामात्रविषयं व्यापारनियतञ्चेतिविवेकः । उपमास्वभावोक्त्यलङ्कारौ । स्वभावोक्तिलक्षणन्तु 'स्वभावोक्तिः स्वभावस्यजात्यादिस्थस्यवर्णनम्' इति वृत्तं पूर्ववत् ॥

राजा तु तदाकर्ण्य चिन्तितवान्

ऽः शुकपिञ्छगुच्छहा वनान्तास्तृणैः
सेव्याः संप्रति सान्द्रचन्द्रकिकुलैरुत्ताण्डवैर्मण्डिताः ॥
येषु क्षीरविपाण्डु पल्वलपयः कल्लोलयन्तो मना-
ग्वाता वान्ति विनिद्रकेतकवनस्कन्धे लुठन्तः शनैः ॥४६॥

47. माद्यन्ति च तेषु संप्रति प्रोथिनः । तद्युज्यते विहर्तुम्, इत्यवंधारयन्नाहूय बाहुकनामानं सेनापतिमादिदेश ॥

48. 'भद्र द्रुतमनुष्ठीयताम्, समादिश्यन्तां कृतवैरिविपत्तयः पत्तयः, पर्याण्यन्तां मनस्तुरगास्तुरगाः, सज्जीक्रियन्तां निजवेगनिर्जितमातरिश्वानः श्वानः, समारोप्यन्तामपनीताहितायूंषि धनूंषि, गृह्यन्तां निर्मथितप्रोथियूथपाशाः पाशाः' इति ॥

४६. **अच्छेति** । अच्छाच्छैः अत्यन्तनिर्मलैः । शुकानां पिञ्छानि गुच्छा इव पिञ्छगुच्छाः तद्वत् हरितैः हरितवर्णैः तृणैः छन्नाः आवृताः उत्ताण्डवैः अधिकनर्तनैः । सान्द्राणां निबिडानां चन्द्रकिणां मयूराणां कुलैः संघैः मण्डिताः भूषिताः वनान्ताः वनमध्यभागाः संप्रति सेव्याः । येषु वनान्तेषु क्षीरवत् विपाण्डु विशेषेण धवल पल्वलस्य अखातसरसः पयः जल मनाक् किञ्चित् कल्लोलयन्तः चालयन्तः (अनेनशैत्यमुक्तं) विनिद्राणां बिकासितानां केतकवनानां स्कन्धेकाण्डे समूहेवा लुठन्तः पतन्तः (अनेनसौरभ्यमुक्त) वाताःवायवः शनैः मन्दं वान्ति वहन्ति । उपमा काव्यलिंगे अलंकारौ । वृत्तं पूर्ववत् ॥

47. **माद्यन्तीति** । माद्यन्ति हृष्यन्ति तेषु वनान्तेषु प्रोथिनः सूकराः विहर्तुं रन्तु । अवधारयन् निश्चिन्वन् ॥

48. **भद्रेति** । भद्र श्रेष्ठ साधोवा द्रुतं शीघ्रं अनुष्ठीयतां (मयावक्ष्यमाणं) क्रियतां । कृताः वैरिणां अरीणां विपत्तयः विपदः यैस्तथोक्ताः पत्तयः पदातयः समादिश्यन्तां आज्ञाप्यन्तां । मनः चित्तमिव तुरेण जवेन गच्छन्तीति मनस्तुरगाः । तुरगाः अश्वाः । पर्याण्यन्तां । पर्याणं पल्ययनं तद्वन्तः क्रियन्तां । पर्याणवच्छब्दात् 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' इति णिच् 'विन्मतो र्लुक्' इति मतुपोलुक् ततः कर्मणिलोट् । निजवेगेन निर्जितः मातरिश्वा वातः यैस्तथोक्ताः श्वानः कुक्कुराः सज्जीक्रियन्तां सन्नद्धाः क्रियन्तां । अपनीत विमोचितं अहितानां अरीणां आयुः यैस्तथोक्तानि धनूंषि समारोप्यन्तां शरारोपणकरणीक्रियन्तां निर्मथिताः विध्वंसिताः प्रोथिनां सूकराणां यूथपानां सघपतीनां आशाः इच्छाः यैस्तथोक्ताः पाशाः रज्जवः गृह्यन्तां ॥

49. अथ मौलिमिलन्मुकुलितकरकमलयुगलेन सेनापतिना 'यदाज्ञापयति देवः' इत्यभिधाय त्वरया तथा कृते सति ॥

स्वयमपि

निर्मांसं मुखमण्डले परिमितं मध्ये लघुं कर्णयोः
स्कन्धे बन्धुरमप्रमाणमुरसि स्निग्धं च रोमोद्गमे ।
पीनं पाश्चिमपार्श्वयोः पृथुतरं पृष्ठे प्रधानं जवे
राजा वाजिनमारुरोह सकलैर्युक्तं प्रशस्तैर्गुणैः ॥ ४७ ॥

50. आरुह्य च क्रमेण कार्दमिककर्पटावनद्धमूर्धजैर्दण्डखण्डपाणिभिः क्रूरकर्मोचिताकारैर्वागुरावाहिभिरनन्तैः कृतान्तदूतैरिव पाशहस्तैः पापर्द्धिकैरनुगम्यमानः, दूरादुन्नमितकंधरैस्तथोर्ध्वकर्णसं[illegible]कैः काण्डोड्डीनप्राणैरिव वनप्राणिभिराकर्ण्यमानहर्षितहयहेषारवः, पवनकम्पिततरुशाखाप्रपल्लवव्याजेन दूरादेवोत्क्षिप्तहस्ताभिरुड्डीयमानशकुनिकुलकोलाहलच्छलेन

49. **अथेति । मौलीति ।** मौलौ शिरसि मिलत् लगत् मुकुलितं कोरकितं बद्धाञ्जलीति यावत् करकमलयोः पाणिपद्मयोः युगलं द्वयं यस्य तथोक्तेन । **अभिधाय** उक्त्वा । **त्वरया** । वेगेन ॥

४७. **निर्मांसमिति** । मुखमण्डले वक्त्रप्रदेशे । निर्मांसं मांसरहितं । मध्ये मध्यभागे परिमितं स्वल्पं । कर्णयोः श्रोत्रयोः लघुं तनुं । स्कन्धे अंसे ककुदिवा बन्धुरं उन्नतानतं । उरसि कुक्षौ अप्रमाणं मानातीतं रोम्णां उद्गमे उत्पत्तौ स्निग्धं मसृणं रम्यमितियावत् पश्चिमयोः जघन्ययोः पार्श्वयोः पीनं वृद्धं पृष्ठे पृथुतरं अतिशयेनस्थूलं जवे वेगे प्रधानं मुख्यं किञ्च सकलैः उक्तानुक्तैः समस्तैः प्रशस्तैः श्लाघितैः गुणैः युक्तं वाजिनं अश्वं राजा नलः आरुरोह आरूढवान् । स्वभावोक्त्यलंकारः । शार्दूलविक्रीडितवृत्तम् ॥

50. **आरुह्येति । कार्दमिकेति** । कर्दमेन नीलीलोहमलादिनारक्तः कार्दमिकः 'शकलकर्दमाभ्यां' इति ठक् । यः कर्पटः मलिनवस्त्रं शिथिलवस्त्रंवा तेन अवनद्धाः बद्धाः मूर्धजाः शिरोरुहाः येषान्तथोक्तैः । **आकारः** । आकृतिः । **वागुरा** । जालं । **कृतान्तः** । यमः । **पापर्धिकैः** । पापानां ऋद्धिः ( वृद्धिः ) यत्रपापर्धिर्मृगया तयाजीवन्तीति पापर्धिकाः मृगयाचराः तैः । **उन्नमितकन्धरैः** । उन्नमितकण्ठैः । **अकाण्डेति** । अकाण्डे अनिमित्ते उड्डीनाः उड्डीय गताः प्राणाः येषान्तथोक्तैरिवेत्युत्प्रेक्षितैः । **वनप्राणिभिः** । अरण्यजन्तुभिः । **आकर्ण्येति** । आक-

भयान्निवार्यमाण इव वनदेवताभिः, अभिमुखागतैरुन्मिषत्तरुपुष्पप्रकरमकरन्दबिन्दुवर्षवाहिभिर्वनविनाशशङ्कितैरर्घ्यमिवोपपादयाद्भिरुपरुध्यमान इव वनमारुतैः, उन्निद्रसान्द्रकुसुमकेसराङ्कुरजालजटिलाभिर्भयादुद्गतरोमाञ्चप्रपञ्चाभिरिवोन्भ्रान्तभृङ्गरवगद्गदरुदितेन निषिध्यमान इव वनवीरुद्भिः, उद्भिन्नभास्वदमन्दकन्दलावलोकनेनानन्द्यमानः श्वानुगतोऽप्यश्वानुगतः सगजमप्यगजं तद्वनमाससाद ॥

51. ततश्च केचिदुद्यत्परश्वधा गणपतयः, केऽपि दृष्टसिंहिकासुतविक्रमाः शशधराः, केऽपि पाशपाणयो जम्बुकदिक्पालाः, केऽपि हरिमार्गानुसारिणो बलभद्राः, केऽपि चक्रपाणयो मधुसूदनाः, केऽपि

र्यमानः श्रूयमाणः हर्षितानां सञ्जातहर्षाणां हयानां अश्वानां हेषारवः हेषितध्वनिर्यस्यतथोक्तः । **पल्लवव्याजेन** । किसलयामिषेण । **उत्क्षिप्तहस्ताभिः** । उद्धृतकराभिः । **उड्डीति** । उड्डीयमानानां ( कर्मकर्तरिलट शानच् । उत्पतमानानां शकुनिकुलानां पक्षिसंघानां कोलाहलच्छलेन कलकलव्याजेन ( अत्र पूर्वत्रचकैतवापह्नुत्यलंकारः ) **निवार्यमाण इव** । अत्रोत्प्रेक्षा । **अभीति** । अभिमुखं यथा तथा आगतैः उन्मिषतां विकसतां तरुपुष्पाणां प्रकराणां समूहानां मकरन्दबिन्दूनां मधुपृषतां वर्षं वृष्टिं वहन्तीति तच्छीलैः । वनेति । सञ्जातवनविनाशशकैः । अतएव अर्घाय इद अर्घ्यं अर्घ्यजल उपपादयाद्भिः सपादयद्भिरिवेत्युत्प्रेक्ष्यमाणैः । वनमारुतैः । उपरुध्यमानः अनुनीयमान इव । **उन्निद्रेति** । विकसितनिबिडपुष्पाकिञ्जल्कप्ररोहसमूहैर्व्याप्ताभिः । **भयात्** । **उद्गतेति** । उत्पन्नपुलकततिभिरिवस्थिताभिः । **वनवीरुद्भिः** । वनलताभिः । **उदिति** । उद्भ्रान्तानां भृंगाणां आरवः ध्वनिरेव गद्गदं मनाक्स्फुटं रुदितं रोदनं तेन । निषिध्यमानः प्रतिषिध्यमान इव । **उदिति** । उद्भिन्नानामुद्गतानां भास्वतां कान्तिमतां अमन्दानां बहुलानां कन्दलानां नवांकुराणां अवलोकनेन आनन्द्यमानः । **श्वानुगतः** । श्वभिरनुगतोपि । **अश्वानुगतः** । नश्वभिरनुगतः (इति विरोधः) अश्वैरनुगतः (इति परिहारः) विरोधाभासोऽलोत्तरत्रचालकारः । (सः नलः) **सगजं** । गजयुक्तमपि । **अगजं** । गजरहितं । अगे पर्वते जातञ्च । **तद्वनं** । मृगयावनं । **आससाद** । प्राप ॥

51. **ततश्चेति** । उद्यन्तः पलायमानाः परे उत्कृष्टाः ये श्वानः. तान् दधतीतितथोक्ताः उद्गृह्यमाणपरशवश्च गणस्य सेनायाः पतयः हेरंबाश्च । दृष्टः सिंहिकासुतस्य केसरिकिशोरस्य राहोश्च विक्रमः विशिष्टक्रमणं पराक्रमश्चयैः । शशस्य रोमकर्णमृगस्यधराः चन्द्राश्च । पाशः पाणौ येषान्ते पाशपाणयः वरुणाश्च । जंबु-

शिवागमानुवर्तिनो रौद्राः, केऽप्याहिताग्नयो विप्रलोकाः, केऽपि खण्डिताञ्जनाधरप्रवालाः प्रभञ्जनाः, केऽप्युत्खातदन्तिदन्तमुष्टयो निस्त्रिंशाः, तस्य पृथ्वीपतेराकुलितश्वापदाः पदातयो वनं रुरुधुः ॥

52. ततश्च तैः क्रियन्ते विकलभा वननिकुञ्जाः कुञ्जराश्च, ध्रियन्तेऽनेकधारयातिपातिनः खड्गाः खड्गिनश्च, कृष्यन्ते कूजन्तः कोदण्डदण्डा गण्डकाश्च, विक्षिप्यन्ते परितः शराः शरभाश्च, भज्यन्ते तरवस्तरक्षवश्च॥

कानां सृगालानां दिशं निस्सारणं 'दिक्तुनिस्सारणम्मुखम्' इति यादवः । पालयन्ति प्रतीक्षन्ते इति तथोक्ताः जंबुकदिशः प्रतीच्या. पालकाश्च । 'जंबुक फेरवेनीचे प्रतीचीदिक्पनावपि' इति विश्वः । हरि सिंह मार्गं मृगसमूहं हरेः कृष्णस्य मार्गं पन्थानञ्च अनुसरन्तीति तच्छीलाः । बलेन भद्राः श्रेष्ठाः बलदेवाश्च । चक्र पाणौ येषान्ते चक्रपाणयः विष्णवश्च । मधु क्षौद्रं मधुः तदाख्यासुरश्च तस्य सूदनं क्षरणं मारणञ्च यैस्तथोक्ताः । शिवायाः सृगाल्याः गमः गतिः शिवागमः शिवशास्त्रञ्च तं अनुवर्तन्त इति तच्छीलाः । रौद्राः भीषणाः शैवाश्च । आहितः (गुल्मादिषु) उत्पादितः अग्निः यैस्ते आहिताः आधानादिना संस्कृताः अग्नयः गार्हपत्याहवनीयदाक्षिणाग्नयः यैस्तथोक्ताश्च । वीन् पक्षिणः प्रकर्षेण लोकन्ते पश्यन्तीतितथोक्ताः ब्राह्मणजनाश्च । खण्डिताः शकलिता. अञ्जनस्य पञ्चिकपक्षिणः यद्वा अञ्जनशाखिनः अधरपल्लवाः पुच्छाध.पिञ्छानि अधः किसलयानिवायैः पक्षे खण्डितः दष्टः अञ्जनायाः हनुमन्मातुः अधरपल्लवः ओष्ठकिसलयः यैस्तथोक्ताः । प्रकर्षेण भञ्जन्तीति प्रभञ्जनाः वायवश्च उत्खाताः दन्तिदन्ताः यैस्तथोक्ताः मुष्टयः संग्राह्याः येषान्ते पक्षे उत्खातः उत्क्षिप्तः दन्तिदन्तप्रधानः मुष्टिः त्सरुः येषान्तथोक्ताः । निस्त्रिंशाः क्रूरकर्माणः खड्गाश्च । आकुलिताः श्वापदाः हिंस्रमृगायैस्तथोक्ता. तस्य पृथ्वीपतेः नलस्य पदातयः पत्तयः वनं रुरुधुः अरुधन् । अत्रश्लेषालङ्कारः ॥

52. **ततश्चेति** । तैः पत्तिभिः वननिकुञ्जाः लतादिपिहितवनप्रदेशाः कुञ्जराः गजाश्च विगताः व्यपेताः कलभाः करिपोताः येषु विकला (भयात्) न्यूना भा कान्तिर्येषान्तथोक्ताश्च । क्रियन्ते (श्लिष्टातुल्ययोगिता एवमुत्तरत्रापि) अनेकया धारया अत्यन्तं पतन्तीति तच्छीलाः खड्गाः द्विधारा असयः अनेकधा बहुधा रयेण वेगेन अतिपतन्तीति तच्छीलाः खड्गिनः उद्भिन्नशृङ्गाः प्रौढाः गण्डकाश्च ध्रियन्ते गृह्यन्ते । कूजन्तः अव्यक्त शब्दायमानाः कोदण्डदण्डाः धनुर्दण्डाः गण्डका. बालका गण्डकाश्च कृष्यन्ते आकृष्यन्ते । शराः बाणाः शरभाः तदाख्याः अष्टपादमृगाश्च परितः समन्ततः विक्षिप्यन्ते अस्यन्ते विक्षिप्ताः दुःखिताश्चक्रियन्ते । तरवः वृक्षाः तरक्षवः मृगादनाश्च भज्यन्ते आमृद्यन्ते ॥

53. क्षणेन च पतन्ति पीवरा वराहाः, सीदन्ति दन्तिनः, विरसं रसन्ति सातङ्का रङ्कवः, प्रकाशैलं शैलं भयादारोहन्ति रोहिताः, शरसंघातघूर्णिता यान्ति महीं महिषाः, दुर्गसंश्रयं श्रयन्ते तरलितनेत्राश्चित्रकाः, त्वरिततरं तरन्तीवोत्पतन्तो नभसि निजजवनिर्जिततुरंगाः कुरङ्गाः ॥

तत्र च व्यतिकरे

जाताकस्मिकविस्मयैः किमिदमित्याकर्ण्यमानः सुरैः
संत्रासोज्झितकर्णतालचलनाद्दिग्दन्तिनः कम्पयन् ।
जन्तूनां जनितज्वरः स मृगयाकोलाहलः कोऽप्यभू-
द्येनेदं स्फुटतीव निर्भरभृतं ब्रह्माण्डभाण्डोदरम् ॥ ४८ ॥

54. राजाप्येकशरप्रहारपातितमत्तमातङ्गः सर्वतो विहारिहरिहरिणशश-

53. **क्षणेनेति** । **पीवराः** । पीनाः । **सीदन्ति** । विषादं गच्छन्ति । **विरसं** । निर्वीर्यं नीरागवा यथातथा । **रसन्ति** । शब्दायन्ते । **सातंकाः** । सभयाः । **रंकवः** । मृगाः । **प्रकाशैलं** । प्रकाशाः स्पष्टाः एला एलालता यत्र (शैले) तथोक्तम् । **रोहिताः** । तदाख्यमृगविशेषाः । **शरेति** । शरैः सम्यग्घातेन हननेन घूर्णिताः भ्रमणं प्राप्ताः । **दुर्गसंश्रयम्** । दुर्गमस्थानम् । **श्रयन्ते** । आश्रयन्ति । **तरलितम्** । भ्रमितम् । चित्रकाः मृगविशेषाः । **त्वरिततरम्** । अतिशीघ्रम् । **तरन्तीव** । तरणं कुर्वन्तीव । **उत्पतन्तः** । उत्प्लवमानाः । **जवः** । वेगः । **तुरंगः** । अश्वः । **कुरंगाः** । हरिणाः ॥

४८. **तत्रचव्यतिकरे** । तादृशे सम्बन्धे (मृगादीनां) व्यसनेवा । **जातेति** । जातः अकस्माद्भवः आकस्मिकः विस्मयः आश्चर्यं येषान्तथोक्तैः सुरैर्देवैः इदं (सामान्येनपुंसकं) किमिति आकर्ण्यमानः सन्त्रासेन भीत्या उज्झितं त्यक्तं कर्णतालयोः तालवृन्तसदृशकर्णयोः चलनं यैस्तथाभूतान् । दिग्दन्तिनः दिग्गजान् । कम्पयन् कम्पवतःकुर्वन् । जन्तूनां प्राणिनां जनितः ज्वरः तापः येनतथोक्तः सः मृगयायां आखेटके कोलाहलः कलकलः कोपि अनिर्वचनीयः अभूत् येन कोलाहलेन निर्भरं निबिडं यथातथा भृतं पूर्णं इदं ब्रह्माण्डमेव भाण्डं पात्रं तस्योदरं मध्यं स्फुटति दलतीव । अत्रोत्प्रेक्षा । पूर्वार्धे कलकलः स्वर्गे सर्वदिशश्च व्याप्त इति वक्तव्ये प्रकारान्तरेणकथनात्पर्यायोक्तालङ्कारश्च । तल्लक्षणन्तु 'पर्यायोक्तन्तुगम्यस्य वचोभंग्यन्तराश्रयम्' इति । शार्दूलविक्रीडितवृत्तम् ॥

54. **राजेति** । **मातंगः** । गजः । **विहारीति** । विहरणशीलानां हरिप्रभृतीनां (हरिः सिंहः शंबरः मृगभेदः) हनने वधे हेलया लीलया । **तरुणेति** ।

कशम्बरवराहहननहेलया विचरन्तितस्ततस्तरुणतरतमालमञ्जरीजालनी-लोद्धुषितस्कन्धकेसरमूर्ध्वस्तब्धकर्णसंपुटमश्वचक्राय क्रुध्यन्तमाघूर्णित-घोणमनवरतकृतघनघोरघर्घररवमुत्क्षिप्तपुच्छगुच्छमाभिमुखमेकास्मिन्नति - सान्द्रभद्रमुस्तास्तम्बभाजि पङ्किलपल्वलप्रदेशे तं शूरसूकरमपरमिव दवदहनदग्धाद्रिमद्राक्षीत् ॥

55. दृष्ट्वा च रचितशरसंधानलाघवो राघव इव राक्षसेश्वरस्य तस्योपरि परिणद्धविविधपत्रैः पतत्रिभिरभ्यवर्षत् ॥

तत्र च व्यतिकरे

किमश्वः पार्श्वेषु प्लवनचतुरः किंनु नृपतिः
शरान्मुञ्चन्नुच्चैश्चलतरकराकृष्टधनुषा ।
किमालोलः कोलः परिहृतशरः शौर्यरसिको
न जानीमस्तेषां क इह परमो वर्ण्यत इति ॥४९॥

तरुणतराणां अतिप्रौढानां तमालमञ्जरीणां तापिञ्छवल्लरीणां जालवत् समूहवत् नीलाः उद्घुषिताः उत्तब्धाः । यद्वा—उद्घोषेण प्रकटितवैराभिप्राया इवेत्युपचरिताः । "घुषिरविशब्दने" इत्यनेनाविशब्दने इण्णिषेधाद्विशब्दने भवत्येवेट् । (विशब्द-नमभिप्रायाविष्करणम्) स्कन्धकेसराः अंससटाः यस्य तथोक्तम् । ऊर्ध्वौ स्तब्धौ स्थिरौ कर्णसम्पुटौ यस्य तथोक्तम् । अश्वानां चक्राय मण्डलाय क्रुद्ध्यन्तं कुप्यन्तं "क्रुधद्रुह" इत्यादिना चतुर्थी । आसमन्तात् घूर्णिता भ्रान्ता घोणा नासा यस्य तथोक्तम् । अनवरत सदा कृतः घनः निबिडः घोरः घर्घररवः घुरघुरध्वनिः यस्य तम् । उत्क्षिप्तः पुच्छस्य गुच्छः पूलिका यस्य तम् । **अतीति** ॥ अत्यन्तं सान्द्राणां निबिडानां भद्राणां श्रेष्ठानां मुस्तानां कशेरूणां स्तम्बं गुल्मं गुच्छं वा भजतीति तथो-क्ते । पङ्कः (कर्दम) अस्मिन्नस्तीति पङ्किलः । 'पिच्छादित्वादिलच्' पल्वलस्य अखा-तसरसः प्रदेशस्तस्मिन् अपरं दवदहनेन दवाग्निना दग्धं अद्रिमिव स्थितं तं शूरं सू-कर वराहं अद्राक्षीत् दृष्टवान् ॥

55. **दृष्ट्वेति** । **लाघवम्** ॥ शैघ्र्यम् । **परीति** ॥ परिणद्धानि परित बद्धानि विविधानि पत्राणि कङ्कपत्राणि येषु तथोक्तैः । **पतत्रिभिः** ॥ बाणैः ॥

४९. **किमिति** ॥ पार्श्वेषु प्लवने प्लुतगतौ चतुरः निपुणः अश्वः परमो **वर्ण्यते** किं चलतरकरेण आकृष्टेन धनुषा उच्चैः आधिक्यान् शरान्मुञ्चन् नृपतिः नु नलो व परमो वर्ण्यते किं आलोलः चञ्चलः परिहृताः शराः येन तथोक्तः शौर्ये शूरत्वे रसः

अपिच ।

३ अजनि जनितपृथ्वीमण्डलोत्पातकम्पं
किमपि चलितशैलं द्वन्द्वयुद्धं तयोस्तत् ।
स्खलिततुरगवेगो विस्मयेनैष यस्मि-
न्दिनपतिरपि शौर्याश्चर्यसाक्षी बभूव ॥५०॥

अथ कथमपि नाथं प्रोथियूथस्य जित्वा
ज्वरित इव विशालं सालसः सालमूले ।
सुखमभजत राजा राजमानः श्रमाम्भः-
कणकलितकपोलालोललीलालकेन ॥५१॥

56. तत्र च स्थितं श्रममुकुलितनयनारविन्दम्, आन्दोलयन्तः कुसु-

प्रीतिः अस्यास्तीति रसिकः "अत इनि ठनौ" इति ठन् । कोलः सूकरः परमो व-र्ण्यते किम् । इह अस्मिन्समये तेषां अश्वनृपसूकराणाम्मद्ध्ये कः परमः श्रेष्ठः वर्ण्यते इति न जानीमः न बुद्ध्यामहे । सन्देहालङ्कारः । शिखरिणीवृत्तम् । "रसैरुद्रै-श्छिन्नायमनसभलागश्शिखरिणी" इति लक्षणात् ॥

५०. **अजनीति** ॥ जनितः पृथ्वीमण्डलस्य उत्पातैः उल्काद्युपसर्गैरिव कम्पः येन तथोक्तम् । चलिताः शैलाः यस्मिन्तत् किमपि अनिर्देश्यं तयोः नृपसूकरयोः तत् द्वन्द्वयुद्ध अभिव्यक्तं जन्यं "द्वन्द्वरहस्य" इत्यादिना साधु । अजनि जातं यस्मिन् युद्धे विस्मयेन आश्चर्येण एषः दिनपतिः रविरपि स्खलितः प्रतिबद्धः तुरगवेगः यस्य तथोक्तस्सन् शौर्याश्चर्यस्य साक्षी साक्षात् द्रष्टा बभूवेव इत्युत्प्रेक्षते कविः अत्र गम्योत्प्रेक्षा । मालिनीवृत्तम् । "ननमयययुतेय मालिनी भोगिलोकैः" इति लक्षणात् ॥

५१. **अथेति** । अथ कथमपि कृच्छ्रेण प्रोथियूथस्य कोलसंघस्य नाथं जित्वा ज्वरितः रुग्णइव सालसः अलसशब्दः भावप्रधानः आलस्येनसहितः श्रमांभसां कणैः शीकरैः कलितयोः व्याप्तयोः कपोलयोः गण्डयोः आलोलः चञ्चलः लीलायुक्तः विलासयुक्तः अलकः कुन्तलस्तेन राजमानः शोभमानः राजा विशालं सुखं सुखकरं सालस्य वृक्षस्य मूलं अभजत । अन्योज्वरितोपि अलसः मूलादीनि सेवमानः खेदबिन्दुलक्ष्यमाणज्वरापगमो राजते । अत्रोपमा । वृत्त पूर्ववत् ॥

56. **तत्रेति** । **मुकुलितम्** । निमीलितम् । **अरविन्दम्** । कमलम् । **आन्दोलयन्तः** । चालयन्तः । **तरलयन्तः** । कंपयन्तः । **शिखीति** । शि

मिततरून्, तरलयन्तः शिखिशिखण्डमण्डलानि, ताण्डवयन्तस्तनुल-तापल्लवनिवहान्, वहन्तो वहन्निर्झरजलशिशिरशीकरनिकरान्, करालयन्तः कुटजकुड्मलानि, मकरन्दबिन्दुमुचो मन्दमानन्दयामासुः कम्पितनीपवनाः पवनाः ॥

57. अनन्तरमनवरतकरालकालकौलेयककुलकवलनाकुलितकोलकरिकुरङ्गकण्ठीरवकिशोरपृषत्पृष्ठधाविते परितः परिजने, जनितविविधमृगवधूवधव्याधीन्व्याधान्निवारयितुमिवान्तरान्तराप्रसारितकरे मध्यस्थतां गतवति भगवति गभस्तिमालिनि, सहसंवर्धितमृगविनाशशोकभरादिव वनवीरुधां पतत्सु पुष्पलोचनेभ्यो वाष्पेष्विव मध्याह्नोष्णाविलीनमकरन्दबिन्दुषु, श्रूयमाणेषु वनदेवतानां वनविमर्दोपालम्भेष्विव तरुखण्डोड्डीनविविधविहङ्गविरुतेषु, विघट्टितार्भककुरङ्गकुटुम्बिनीकरुणकूजि-

खिनां मयूराणां शिखण्डानां पिच्छानां मण्डलानि समूहान् । **ताण्डवयन्तः** ॥ उद्धतं नर्तयन्तः । **तन्विति** । तनूनां कृशानां लतानां पल्लवानां निवहान् समूहान् । **वहदिति** । वहतां प्रवहतां निर्झरजलानां झरतोयानां शिशिरशीकराणां शीतलकणानां निकरान् समूहान् । **करालयन्तः** । विकासयन्तः । **कुटजकुड्मलानि** । गिरिमल्लिकाकोरकान् । **मकरन्दः** । पुष्परसः । **मन्दम्** । अल्पं यथा तथा । **कम्पितनीपवनाः** । चलितकदम्बकाननाः ।

57. **अनन्तरमिति** । **अनवरतेति** । अनवरतं सदा करालं भयंकरं कालं श्यामं कौलेयकानां शुनां कुलं सङ्घः तेन कबलनया भक्षणेन आकुलिताः कोलाः सूकराः करिणः गजाः कुरङ्गाः हरिणाः कण्ठीरवकिशोराः सिंहशिशवः पृषन्तः श्वेतबिन्दुयुक्तमृगाः "पृषन्मृगे पुमान् बिन्दौ नद्व्योः पृषतोऽपि ना । अनयोश्च त्रिषु श्वेतबिन्दुयुक्तेऽप्युभाविमौ" इति । तेषां पृष्ठतो धाविते सति । **वधव्याधीन्** । वधएव व्याधिर्येषान्तान् । **व्याधान्** । किरातान् । **अन्तरान्तरा** । मध्ये मध्ये । **करः** । किरणः हस्तश्च । **मध्यस्थताम्** । दिनमध्यस्थितिं तटस्थताञ्च । **गभस्तिमालिनि** । सूर्ये । **वीरुधाम्** । लतानाम् । **पुष्पेति** । पुष्पाणि लोचनानीव तेभ्यः । **बाष्पेषु** । अश्रुषु । **विलीनः** । विद्रुतः । **विमर्देति** । विमर्दन विनाशेन (जातेषु) उपालम्भेषु निन्दावचनेषु । **उड्डीनाः** । उत्पतिताः । **विहङ्गाः** । पक्षिणः । **विरुतानि** । शब्दाः । **विघट्टितेति** । विघट्टिताः विमर्दिताः अर्भकाः यासान्तथोक्तानां कुरङ्गकुटुम्बिनीनां हरिणाङ्गनानां करुणकूजितव्या-

तद्व्याजेनान्यायमिव फूत्कुर्वतीषु वनराजिषु, इतस्ततः संचरच्चटुलतरतुरगखुरशिखरशिखोत्खातधरणिमण्डलाद्वनविनाशवार्तां गगनचरेभ्यः कथयितुमिवोत्पातितेऽम्बरतलमकृतपरित्राणे च मूर्छित इव पुनः पुनः पतति भुवि भवनपारावतपतत्रिपत्रधूसरे धूलिपटले, सकम्पकपिकलापोल्लनलुलिततरुतरुणमञ्जरीपुञ्जनिकुञ्जादुद्वेजिते मञ्जु गुञ्जति वनान्तरमपरमुच्चलिते चञ्चलचञ्चरीकचक्रवाले, चङ्क्रमणक्रमेण च संपन्ने सैन्यस्य श्रमावसरे तस्यैव सरससरलसालद्रुमस्याधस्तान्निषण्णे श्रमभाजि राजनि॥

अकस्मात्कुतोऽपि

वल्लीवल्कपिनद्धधूसरशिराः स्कन्धे दधद्दण्डकं
ग्रीवालम्बितमृन्मणिः परिकुथत्कौपीनवासाः कृशः।
एकः कोऽपि पटच्चरं चरणयोर्बद्ध्वाऽध्वगः श्रान्तवा-
नायातः क्रमुकत्वचा विरचितां भिक्षापुटीमुद्वहन्॥१२॥

जेन शोकध्वनिमिषेण । न्यायस्याभावः अन्याय "अव्यय विभक्ति" इत्यादिना-व्ययीभावः । इति वनराजिषु वनपङ्क्तिषु फूत्कुर्वतीषु फूत्कार आर्तजल्पन कुर्वतीष्विव सतीषु । **चटुलः** । चञ्चलः । **खुरशिखरशिखा** । शफाग्राग्र । **अम्बरतलं** । नभस्थलं प्रति । **अकृतपरित्राण** । अलब्धरक्षणे । **मूर्छिते** । सञ्जातमूर्छे । **भवनेति** । गृहकपोतपक्षिगरुदिव धूसरम् धूम्रवर्ण तस्मिन् । **पटले** । समूहे । **सकम्पेति** । सकम्पानां कपिकलापानां वानरसङ्घानां उल्लनेन आन्दोलनेन लुलितं मृदितं तरोः तरुणमञ्जरीणां प्रौढवल्लरीणां पुञ्जं बृन्द यस्मिन् तथोक्तात् निकुञ्जात् । **उद्वेजिते** । भीते । **मञ्जु** । मनोज्ञं यथा तथा । **गुञ्जति** । शब्दायमाने । **चञ्चरीकचक्रवाले** । भ्रमरसङ्घे । **चंक्रमणं** । सञ्चारः । **सम्पन्ने** । श्रान्तेनि । **सरसेति** । सरसस्य स्निग्धस्य सरलस्य अवक्रस्य सालद्रुमस्य । **अधस्तात्** । अधः । **निषण्णे** । उपविष्टे सति ॥

५२. **अकस्मात्** । अतर्किते । अव्ययमिदं । **वल्लीति** । वल्लीवल्केन लतात्वचा पिनद्धं बद्ध धूसर धूम्रवर्ण शिरः यस्य तथोक्तः स्कन्धे अंसे दण्डकं अल्पदण्डं दधत् धरन् ग्रीवायां कण्ठे आलम्बितः मृन्मयमणिः काचमणिः यस्य तथोक्तः परितः कुथत् पूतीभवत् "कुथपूतीभावे" इत्यस्माच्छता यद्वा परितः कुथइवकबलइवाचरतीति परिकुथत् कौपीनवासः कौपीनवस्त्र यस्य तथोक्तः

58. आगत्य च राजानमवलोक्य सविस्मयमेवमेष चिन्तयांचकार॥

अब्जश्रीसुभगं युगं नयनयोर्मौलिर्महोष्णीषवा-
नूर्णारोमसखं मुखं च शशिनः पूर्णस्य धत्ते श्रियम्।
पद्मं पाणितले गले च सदृशं शङ्खस्य रेखात्रयं
तेजोऽप्यस्य यथा तथा सजलधेः कोऽप्येष भर्ता भुवः॥

59. तदेवंविधाः खलु महनीया महानुभावा भवन्तीत्येवमवधार्य समुपसृत्य "स्वस्ति स्वकान्तिनिर्जितमकरध्वजाय तुभ्यम्" इत्यवादीत्॥

60. राजापि सविस्मयमना मनागुन्नमितमस्तकः स्वागतप्रश्नेनाभिनन्द्य

(कूपपतनमर्हतीति कौपीनं अकार्यं ,"शालीनकौपीने अधृष्टाकार्ययोः" इति साधु अकार्यहेतुत्वात् पुरुषलिङ्गमपि तदाच्छादकत्वात् गुह्यचीरमपि कौपीनं) कृशः कार्श्यवान् श्रान्तवान् गमनश्रमवान् क्रमुकत्वचा पूगतरुवल्केन विरचितां कृतां भिक्षापुटीं भिक्षापात्र उद्वहन् एकः कोपि अध्वगः पथिकः चरणयोः पटच्चर जीर्णवस्त्रखण्ड बद्ध्वा आयातः। शार्दू .. वृत्तम्॥

58. **आगत्येति। सविस्मयं**॥ साश्चर्यं। **एषः**। अध्वगः॥

५३. **अब्जेति**॥ यथा येन प्रकारेण अस्य (नलस्य) नयनयोः युगं द्वयं अब्जस्य पद्मस्येव श्रिया कान्त्या सुभग सुन्दरं (अस्ति) मौलिः शिरः महत् उष्णीषं शिरस्थितलक्षणविशेषः "उष्णीषन्तु शिरोवेष्टे किरीटेलक्षणान्तरे" इति विश्वः। तद्वान् अस्ति। यद्वा महान् उष्णीषवांश्च। ऊर्णारोम्णः भ्रूमध्यरोमावर्तस्य सखायं ऊर्णारोमसखं भ्रूमध्यशुभरोमावर्तयुक्तमित्यर्थः। "राजाहस्सखिभ्यः" इति टच् मुखं पूर्णस्य शशिनः चन्द्रस्य श्रियं धत्ते धारयति। पाणितले (विषये) पद्मं सदृशं अस्ति। गले कण्ठे (विषये) शङ्खस्य कम्बोः रेखाणां त्रय सदृशं अस्ति तेजोपि दीप्तिरपि अन्यादृशमस्तीति शेष। तथा तेन प्रकारेण एषः पुरुषः सजलधेः ससमुद्राया भुवः कोपि अनिर्वचनीयप्रभाव भर्ता पतिः (इति मन्ये) अत्र उपमानिदर्शनाप्रतीपालङ्काराः। निदर्शनाप्रतीपलक्षणेतु॥ "वाक्यार्थयोस्सदृशयोरैक्यारोपो निदर्शना। प्रतीपमुपमानस्योपमेयत्वप्रकल्पनम्" इति। वृत्तं पूर्ववत्॥

59. **तदिति। महनीयाः**। पूज्याः। **अवधार्य**। निश्चित्य। **समुपसृत्य**। समीपमागत्य। **स्वस्ति**। कुशलमस्तु। **मकरध्वजः**। मन्मथः। **अवादीत्**। उक्तवान्॥

60. **राजेति॥ मनाक्**। ईषत्। **मस्तकः**। शिरः। **स्वागतम्**। सुष्ठु आगतम्। **अभिनन्द्य**। (अध्वग) सन्तोष्य। **तीर्थयात्रिक**। तीर्थं क्षेत्रा-

"तीर्थयात्रिक, कुतः प्रष्टव्योऽसि । क्व च कियच्चाद्यापि गन्तव्यम् । उपविश । विश्रम्य कथय कांचिदपूर्वां किंवदन्तीम् । अनेकदेशदृश्वानः किलाश्चर्यदर्शिनो भवन्तीति । न चाकस्मिकं दर्शनमपूर्वः परिचयः स्वल्पा प्रीतिरित्येकमप्याशङ्कनीयम् । अपूर्वदर्शनेऽपि न जात्या मणयः स्वां स्वच्छतामपह्नुवते । तदेहि । मुहूर्तमेकत्र गोष्ठीसुखमनुभवावः" इत्येनमवादीत् ॥

61. असावपि "अपूर्वकौतुककथाकर्णनरसिक, श्रूयतां यद्येवम्" इत्यभिधाय सुखोपविष्टस्यास्य समीपे स्वयमुपविश्य कथयितुमारभत ॥

अस्ति स्वर्गसमः समस्तजगतां सेव्यत्वसंख्याग्रणी-
देशो दक्षिणदिङ्मुखस्य तिलकः स्त्रीपुंसरत्नाकरः ।
यस्मिंस्त्यागमहोत्सवव्यसनिभिर्धन्यैरशून्या जनै-
रुद्देशाः स्पृहणीयभावभरिताः कं नोत्सुकं कुर्वते ॥५४॥

दिकम्प्रति यात्राशीलमस्येति यात्रिकः तस्य सम्बुद्धिः । "शील" इति ठक् । **कुतः** । आगच्छसीति शेषः । **कियत्** ॥ किंप्रमाणमस्य कियत् कियद्दूरमित्यर्थः । **किंवदन्तीं** ॥ जनवार्ता । **अनेकेति** । अनेकान्देशान्दृष्टवन्तः । "दृशेः क्वनिप्" इति क्वनिप् किलेति प्रसिद्धौ । **आकस्मिकम्** ॥ अकस्मात् भव आकस्मिकम् । **परिचयः** । सल्लापादिकम् । **नेति** ॥ जातौ भवाः जात्याः विशिष्टजातीयाः मणयः रत्नानि स्वां स्वीयां स्वच्छतां निर्मलतां नापह्नुवते न छादयन्ति । (इयं लोकोक्तिः) **एहि** । आगच्छ । **मुहूर्तम्** ॥ घटीद्वयपरिमितकालम् । **गोष्ठी** । विनोदकथालापनम्

61. **असाविति** । **रसिक** । रसः (प्रीतिः) अस्यास्तीति रसिकः तस्य सम्बुद्धिः ॥

५४. **अस्तीति** । स्वर्गेण समः समस्तजगतां सेव्यत्वसङ्ख्यायां आश्रयणीयत्वसङ्ख्याने अग्रणीः प्रथमः । दक्षिणस्याः दिशः (चतुरनायिकायाश्च) मुखस्य प्राग्भागस्य (आननस्यच) तिलकः विशेषकायितः । स्त्री च पुमांश्च स्त्रीपुंसौ । "अचतुर" इत्यादिनानिपात्यते । स्त्रीपुंसौ च स्त्रीपुंसौ च स्त्रीपुंसौ च स्त्रीपुंसाः तएव रत्नानि तेषां आकरः स्थानं समुद्रश्च । देशः (विदर्भदेशः) अस्ति । यस्मिन्देशे । त्यागः दानमेव महोत्सवः तत्र व्यसनिभिः आसक्तैः धन्यैः सुकृतिभिः जनैः अशून्याः अरहिताः स्पृहणीयैः भावैः पदार्थैः भरिताः उद्देशाः प्रदेशाः

62. कथं चासौ न प्रशस्यते ॥

63. यत्र त्रिपुरपुरंध्रिरोध्रतिलकहारिणा हरिविरञ्चिचूडामणिमरीचिचक्र-चकोरचुम्बितचरणनखचन्द्ररुचिनिचयेन भगवता सेव्यते सेव्यतयाऽपहसितकैलासश्रीः श्रीशैलः शूलपाणिना ॥

64. यत्र च विकचविविधवनविहारसुरभिसमीरणान्दोलितकदलीदल-व्यजनवीज्यमानानिधुवनविनोदखेदविद्राणनिद्रालुद्रविडमिथुनसनाथपरि-सराः सरसघननिचुलतलचलच्चकोरचक्रवाककुलकपिञ्जलमयूरहारीतहा-रिण्यो नाकलोककमनीयतां कलयन्ति कलमकेदारसाराः सरससहकार-कारस्कराः कावेरीतीरभूमयः ॥

क जनं उत्सुकं उत्कण्ठावन्तं न कुर्वते । सर्वमुत्सुकं कुर्वन्तीत्यर्थः । अत्र उपमा रूपककाव्यलिंगान्यलङ्काराः शार्दू...वृत्तम् ॥

62. कथमिति । असौ । देशः । प्रशस्यते । प्रकर्षेण श्लाघ्यते ॥

63. यत्रेति । यत्र देशे त्रिपुराणां अयोरजतहिरण्मयपुरत्रयाधिपासुराणां पुरन्ध्रीणां स्त्रीणां रोध्रतिलकं लोध्रपुष्पविरचितविशेषकं हरतीति तच्छीलेन त्रिपुरासुरहननात् तत्स्त्रियो विधवाः कुर्वतेत्यर्थः (अत्रपर्यायोक्तालङ्कारः) हरिविरिञ्चयोः विष्णुब्रह्मणोः चूडामण्योः शिरोरत्नयोः मरीचिचक्रैः किरणसमूहैरेव चकोरैः तदाख्यपक्षिभिः चुम्बितः भक्षितः । चरणनखा एव चन्द्ररुचयः चन्द्रकान्तयः तासां निचयः समूहः यस्य तथोक्तेन (अत्ररूपकालङ्कारः) भगवता शूलपाणिना शिवेन अपहसिता कैलासस्य श्रीः शोभा येन तथोक्तः श्रीशैलः सेव्यतया आश्रयणीयत्वेन सेव्यते आश्रीयते ॥

64. यत्रेति ॥ विकचेषु विकसितेषु विविधवनेषु विहारेण सञ्चारेण सुरभिणा वासितेन समीरणेन वायुना आन्दोलितैः कम्पितैः कदलीदलैरेव व्यजनैः तालवृन्तैः वीज्यमानैः वीजनेनोपचर्यमाणैः निधुवनविनोदेन सुरतक्रीडया यो खेदः श्रमः तेन विद्राणैः श्रान्तैः निद्रालुभिः निद्रावद्भिः द्रविडानां मिथुनैः अनेकस्त्रीपुंसैः सनाथः सहितः परिसरः समीपप्रदेशः यासान्तथोक्ताः । सरसानां स्निग्धानां घनानां निबिडानां निचुलानां वानीराणां तलेषु चलद्भिः चकोरैः चक्रवाकानां कुलेन समूहेन कपिञ्जलमयूरहारीतैश्च हारिण्यः मनोहरणशीलाः । कलमकेदारैः शालिक्षेत्रैः सारा श्रेष्ठाः सरसाः स्निग्धा सहकारकारस्कराः चूतवृक्षाः यासु तथोक्ताः । कावेर्याः तीरभूमयः नाकलोकवत् स्वर्गवत् कमनीयतां रमणीयतां कलयन्ति रचयन्ति॥

किं बहुना ।

अस्तु स्वस्ति समस्तरत्ननिधये श्रीदक्षिणस्यै दिशे
स्वर्गस्पर्धिसमृद्धये हृदयहृद्गोदावरीरोधसे ।
यत्र त्रस्तकुरङ्गकार्भकदृशः संभोगलीलाभुवः
सौख्यस्यायतनं भवन्ति रसिकाः कंदर्पशस्त्रं स्त्रियः ॥२९॥

65. तत्र प्रणतसुरासुरशिरः शोणमणिमरीचिचयबहलकुङ्कुमानुलेपपल्लवितपादारविन्दद्वयस्य क्रौञ्चभिदो भगवतः सुगन्धिगन्धमादनाधिवासिनः स्कन्ददेवस्य दर्शनार्थमितो गतवानस्मि ॥

66. तस्माच्च निवर्तमानेन क्वचिदेकस्मिन्नध्वरोधिनि न्यग्रोधपादपतले दीर्घाध्वश्रान्तेन विश्राम्यता मया श्रूयतां यदाश्चर्यमालोकितम् ॥

67. अतिललितपदविन्यासससारसाधुसिन्धुरवधूस्कन्धमधिरूढा, प्रौढस-

५५. **अस्त्विति** ॥ समस्तानां रत्नानां श्रेष्ठवस्तूनां निधये आश्रयाय । स्वर्गं स्पर्धते ताच्छील्येनाभिभवितुमिच्छतीति स्वर्गस्पर्धिनी समृद्धिः सम्पत् यस्यास्तथाभूतायै । हृदयहृत् मनोहरं गोदावर्याः रोधः तीरं यस्यान्तथोक्तायै । श्रीमत्यै दक्षिणस्यै दिशे अवाच्यै स्वस्ति मङ्गळं अस्तु । यत्र दिशि त्रस्तानां भीतानां कुरङ्गकार्भकाणां मनोज्ञहरिणशिशूनामिव दृशौ यासान्तथोक्ताः सम्भोगलीलायाः क्रीडाविलासस्य भुवः स्थानानि रसिकाः अनुरागिण्यः स्त्रियः सौख्यस्य आयतनं आस्पदं कन्दर्पस्य कामस्य शस्त्रमायुधञ्च भवन्ति । वेदाः प्रमाणमित्यादिवत् आयतनं शस्त्रमित्यत्र क्लीबत्वमेकत्वञ्च । अत्र उपमारूपककाव्यलिङ्गान्यलङ्काराः शार्दू...वृत्तम् ॥

65. **तत्रेति** ॥ प्रणतसुरासुराणां शिरस्सु (स्थिताः) शोणमणिमरीचिचयाः पद्मरागकान्तिसमूहा एव बहुलकुङ्कुमानुलेपाः अधिकसिन्दूरविलेपनानि तैः पल्लवितं सञ्जातकिसलयमिव स्थितं पादारविन्दद्वयं यस्य तथोक्तस्य । क्रौञ्चं तदाख्यमसुरावासगिरिं भिनत्ति स्म क्रौञ्चभित् तस्य भगवतः शोभनः गन्धः यस्मिन्सः सुगन्धिः "गन्धस्येत्" इत्यादिना इत्वम् । यः गन्धमादनः तदाख्यगिरिः तमधिवसतीति तच्छीलस्य । स्कन्ददेवस्य कुमारस्वामिनः दर्शनार्थं इतः अस्मादुत्तरदेशात् अस्मि अहं गतवान् ॥

66. **तस्मादिति** ॥ **अध्वरोधिनि** ॥ अध्वानं मार्गं ताच्छील्येन रुणद्धि आवृणोतीति तथाभूते । **विश्राम्यता** । आयासनिवृत्तिं गच्छता ॥

67. **अतीति** ॥ अत्यन्तं ललितेन सुन्दरेण पदन्यासेन चरणनिक्षेपेण साराया श्रेष्ठायाः साध्व्याश्च सिन्धुरवध्वाः करिण्याः स्कन्धं ककुत्प्रदेशं अधिरूढा

खीसहायप्राया, प्रान्तपतच्चारुचामरमरुन्नर्तितालकवल्लरी, कर्णकुवलयालंकारधारिणी, रुचिररुचिमच्चरणनूपुरा, पुरःसरसरागगान्धर्विककण्ठकन्दरविनिःसरत्सरसगीतप्रेङ्खोलनप्रयोगेषु दत्तावधाना, नेत्रे मनाङ्मीलयन्ती, ध्रियमाणमायूरातपत्रमण्डला, मण्डलितमदनचापचक्रवक्रभ्रूः, भूपालपुत्रिका क्वापि क्वापि कुतोऽप्युच्चालिता तदेव न्यग्रोधच्छायामण्डपमशिश्रियत् ॥

६४. तां चालोक्य चिन्तितवानस्मि विस्मितमनाः ॥

" किं लक्ष्मीः स्वयमागता मुररिपोर्देवस्य वक्षःस्थला-
त्कोपात्पत्युरुतावताऽऽमकरोद्देवी भवानी भुवि ।
श्यामाम्भोजसदृक्षपक्ष्मलचलन्नेत्रामिमां पश्यतो
धातस्तात करोषि किं न वदने चक्षुःसहस्रं मम ॥५६॥

आरूढा । प्रौढसखीभिरेव सहायैः प्राया बहुला । प्रान्ते पार्श्वे पतनोः चारुचामरयोर्मरुता वातेन नार्तिताः कम्पिताः अलकाः कुन्तलाः वल्लर्य इव यस्यास्तथोक्ता । कर्णयोः कुवलयालङ्कारं नीलोत्पलावतंसं धारयतीति तच्छीला । रुचिरौ सुन्दरौ रुचिमन्तौ कान्तिमन्तौ चरणयोः नूपुरौ मञ्जीरौ यस्यास्तथोक्ता । पुरः सरन्तीति पुरस्सराः सरागाः मालवादिरागयुक्ताः गन्धर्वाणामिदं यद्वा गन्धर्वेभ्यः आगतं गान्धर्वम् सङ्गीतं तद्विदन्ति तेन जीवन्ति वा गान्धर्विकाः तेषां कण्ठकन्दरात् गलबिलात् विनिस्सरतां विनिर्गच्छतां सरसानां गीतानां प्रेङ्खोलनस्य प्रेङ्खितस्य प्रसारणस्येति यावत् । प्रयोगेषु क्रियाविधिषु प्रा[illegible]ष्विति यावत् । दत्तं अवधानं अवहितत्वं [illegible] सा । मनाक् । किञ्चित् । ध्रियमाणेति ॥ ध्रियमाणानि मयूराणां इमानि मायूराणि बर्हाणि तैः कृतानि आतपत्रमण्डलानि छत्रसमूहाः यस्यास्तथोक्ता । मण्डलितेति ॥ मण्डलिते मण्डलवत्कृते मदनस्य कामस्य चापे धनुषी एव चक्रे तद्वत् वक्रे कुटिले भ्रुवौ यस्यास्तथोक्ता । क्वापि । कुत्रापि देशे स्थिता । कुतोपि ॥ कुतोपि नगरात् । उच्चलिता । निर्गता । आशिश्रियत् । आश्रितवती ॥

६४. तामिति । विस्मितमनाः । आश्चर्ययुक्तचित्तः ॥

५६. किमिति । स्वयं साक्षात् लक्ष्मीः कोपात् देवस्य मुररिपोः वक्षःस्थलात् उरस्थलं विहाय 'ल्यब्लोपेपञ्चमी' आगता किम् । उत अथवा देवी भवस्य स्त्री भवानी शिवा 'इन्द्रवरुणभव' इत्यादिना ङीष् आनुक्च । कोपात् पत्युः पतिं विहाय

अपिच ।

इन्दोः सौन्दर्यमास्यं कलयति कमलस्पर्धिनी नेत्रपत्रे
कालिन्द्याः कुन्तलाली तुलयति विभवं भव्यभङ्गैस्तरङ्गैः ।
तस्याः किं श्लाघ्यतेऽन्यत्सुभगगुणनिधेः काप्यपूर्वैव यस्याः
पुष्पेषोर्वैजयन्ती जयति युवजनोन्मादिनी यौवनश्रीः ॥५७॥

अपिच ।

आकारः स मनोहरः स महिमा तद्वैभवं तद्वयः
सा कान्तिः स च विश्वविस्मयकरः सौभाग्यभाग्योदयः ।
एकैकस्य विशेषवर्णनाविधौ तस्याः स एव क्षमो
यस्यास्मिन्नुरगप्रभोरिव भवेज्जिह्वासहस्रद्वयम् ॥

अत्रापि ल्यब्लोपे पञ्चमी। भुवि अवतारं अकरोत्किं इति । श्यामाम्भोजयोः नीलोत्पलयोः सदृक्षे समीने पक्ष्मले निबिडपक्ष्मवती पक्ष्मन् शब्दात् 'सिध्मादिभ्यश्च' इति इलच्। चलन्ती चञ्चले च नेत्रे यस्यास्तथाभूतां इमां पश्यतः । मम वदने चक्षुषां सहस्रं हे तात पितः धातः ब्रह्मन् किं नकरोषि। इमां सहस्रेण दृग्भिरालोक्य तृप्तस्यामितिशङ्केति भावः । अत्र सन्देह उपमा पर्यायोक्तालङ्काराः । वृत्तं पूर्ववत् ॥

५७. **इन्दोरिति** ॥ तस्याः राजपुत्र्याः आस्यं वक्त्रं इन्दोः चन्द्रस्य सौन्दर्यं कलयति धत्ते । तस्याः नेत्रपत्रे नयनदले कमले स्पर्धितुं अभिभवितुं शीलवती भव्यैः रम्यैः भङ्गैः कुटिलविच्छित्तिविशेषैः (युक्ता) तस्याः कुन्तलाली अळकावलिः तरङ्गैः ऊर्मिभिः (युक्तायाः) कालिन्द्याः यमुनायाः विभवं महिमानं तुलां उपमां आचष्टे तुलयति यमुनावन्नीलेत्यर्थः । तुलाशब्दात् 'तत् करोति तदाचष्टे' इति णिच् । तस्याः अन्यत् इतरदङ्गजात श्लाघ्यते किं अनुपमत्वादनेन वस्तुनेदमङ्गन्तुल्यमिति न वर्ण्यते यथाङ्गानामतिरमणीयत्वं तां यौवनश्रियं वर्णयति सुभगेत्यादिना सुभगाणां सुन्दराणां गुणानां निधेः यस्याः यौवनश्रीः कापि अनिर्देश्यविभवा अपूर्वा पुष्पेषोः मन्मथस्य वैजयन्ती पताकेव युवजनान् तरुणान् उन्मादयति मोहयतीति तच्छीलासती जयति सर्वोत्कृष्टा वर्तते । अपूर्वैवेति पाठे सा कन्या काप्यपूर्वैवेत्यर्थः । अत्र उपमालङ्कारः । आक्षेपालङ्कारश्च तल्लक्षणन्तु 'विशेषबोधायोक्तस्य वक्ष्यमाणस्य वा भवेत्। निषेधाभासकथनमाक्षेपस्समुदाहृतः' इति । वृत्त पूर्ववत्॥

५८. **आकार इति** ॥ तस्याः मनोहरः रम्यः आकारः आकृतिः स एव नान्यस्तत्तुल्य इत्यर्थः । महत्याः भावः महिमा पूज्यता स एव वैभव पाटवं तदेव वयः यौवनवयः तदेव कान्तिः शोभा सैव विश्वस्य प्रपञ्चस्य विस्मयकरः आश्चर्य-

69. सापि यथा त्वमिदानीं मामिह पृच्छसि तथार्धपथमिलितं कंचिदुदीचीनमध्वगं दक्षिणस्यां दिशि प्रस्थितमादरेण पृच्छन्ती मुहूर्तमिव तत्रैव विश्रमितुमारभत ॥

70. श्रुतश्चायं मयापि तेन तस्याः पुरः कस्यचिदुदीच्यनरपतेः श्लाघ्यमानस्य कथावशेषालापः ॥

तस्मिन्स्मितमुखे यूनि यूपदीर्घभुजद्वये ।
ते धन्या न्यपतन्येषां कंदर्पसदृशे दृशः ॥ ५९ ॥

किं बहुना ।

सा त्वं मन्मथमञ्जरी स च युवा भृङ्गस्तवैवोचितः
श्लाघ्यं तद्भवतोः किमन्यदपरं किं त्वेतदाशास्महे ।
भाग्यैर्योग्यसमागमेन युवयोर्मानुष्यमाणिक्ययोः
श्रेयानस्तु विधेर्विचित्ररचनासंकल्पशिल्पश्रमः ॥६०॥

कारी सौभाग्य शोभनमङ्गलविशिष्टत्वं तदेवभाग्यं तस्य उदयः आविर्भावः स एव । अस्मिन् जगति यस्य कविसार्वभौमस्य उरगप्रभोः आदिशेषस्येव जिह्वानां रसनानां सहस्रद्वयं भवेत् स एव तस्याः (सबन्धिनः) एकैकस्य (वस्तुनः) विशेषस्य अतिशयस्य वर्णनस्य विधौ कर्मणि क्षमः शक्तः । अत्र उपमा काव्यलिङ्गपर्यायोक्तालकाराः निर्दिष्टाः अनन्वयालकारोध्वन्यते च । वृत्तपूर्ववत् ॥

69. **सेति** । **अर्धेति** ॥ अर्धं पथः (मार्गस्य) अर्धपथः पथिन्शब्दस्य "ऋक्पूरब्धूः पथामानक्षे" इत्यनेन समासान्तः अप्रत्ययः । अर्धपथे मिलितं सङ्गतं । **उदीचीनम्** ॥ उदक् (उत्तरा) भवम् **प्रस्थितं** । कृतप्रयाणं । **विश्रमितुं** । आयासनिवृत्तिं कर्तुं ॥

70. **श्रुतइति** । **उदीच्यः** ॥ उदक् भवः । **कथेति** । कथायाः चरित्रस्य अवशेषस्य शेषस्य आलापः कथनं ।

५९. **तस्मिन्निति** ॥ स्मितमुखे हासयुक्तवदने यूपवत् उपाकरणार्थपशुबन्धनस्तम्भवत् दीर्घं भुजद्वयं यस्य तथोक्ते । कन्दर्पसदृशे मन्मथतुल्ये तस्मिन् मयावर्णिते यूनि तरुणे । येषां दृशः नेत्राणि न्यपतन् निपतन्तिस्म । ते धन्याः पुण्यवन्तः । अत्र उपमाकाव्यलिङ्गे अलङ्कारौ । श्लोकवृत्तं ॥

६०. **सेति** ॥ सा तथाविधा त्वं मन्मथोद्दीपिका मञ्जरी वल्लरीव असि भृंगः मञ्जरीमकरन्दपानार्हः सः युवा तादृशलक्षणश्च तवैव उचितः योग्यः भवतीच

71. तन्न जाने स कः सुकृती तेन तस्याः श्रवणादेवोल्लसद्बहुलपुलकाङ्कुरोत्तम्भितांशुकायाः पुरो विस्तरेणैवं वर्णितः

72. न च मयापि विस्मयविस्मृतविवेकेन केयं कस्येयं कुत्र कुतो वा प्रस्थितेति प्रश्नाग्रहः कृतः। केवलमदृष्टपूर्वरूपोत्पन्नाकस्मिककौतुकातिरेकास्तमितसमस्तान्यव्यापारेणैकाग्रतया ग्रहनिरुद्धेनेवान्धेनेव मूकेनेव मूढेनेव मूर्छितेनेव संजातसंतमसेनेव विषविघूर्णितेनेव स्तोभस्तम्भितेनेव गतायामपि तस्यां तेनाध्वनीनेन सह तत्रैव न्यग्रोधतरुतले सुचिरमासितमासीत् ॥

भवांश्च भवन्तौ तयोः भवतोः "पुमान् स्त्रिया" इत्येकशेषः। तत् मिथुनं श्लाघ्यं नविद्यते पर श्रेष्ठं यस्मात्तत् अपरं अन्यत् किं वाच्यम्। किन्तु एतत् वक्ष्यमाणं आशास्महे प्रार्थयामहे "आङश्शासु इच्छायां" इति तङ्। मानुष्ये मानुषत्वे माणिक्ययो नदाख्यरत्नविशेषयोरिवास्थितयोः त्वञ्च त्वञ्चयुवां तयोः युवयोः (अत्राप्रत्यक्षमपिनलं बुद्ध्यारुढत्वेन प्रत्यक्षमिवमत्वा भवतोः युवयोरिति चोक्तिः) भाग्यैः अदृष्टैः (लब्धेन)- योग्यसमागमेन उचितसङ्घटनेन विधेः धातुः विचित्रायां अद्भुतायां रचनायां सृष्टौ संकल्पः मनोव्यापारः स एव शिल्पं कर्म "शिल्पं कर्मकलादिकं" इत्यमरः। तत्र श्रमं परिश्रमः श्रेयान् सफलः अस्तु। अत्र रूपकं काव्यलिङ्गञ्चालङ्कारौ। शार्दू...वृत्तं ॥

71. **तन्नेति** ॥ श्रवणात् - युववर्णनाकर्णनात् उल्लसद्भिः प्रकाशमानैः बहुलैराधिकैः पुलकाङ्कुरैः रोमाञ्चप्ररोहैः उत्तंभितांशुकायाः उद्धूतवस्त्रायाः तस्याः पुरः तेन अध्वगेन यः विस्तरेण एवं वर्णितः सः सुकृती पुण्यवान् कः तन्नजाने ॥

72. **नचेति। विवेकः** ॥ विवेचन कर्तव्याकर्तव्यविचार इति यावत्। **प्रश्नाग्रहः**। पृच्छायां निर्बन्धः। **अदृष्टेति**। पूर्वमदृष्टेन रूपेण उत्पन्नेन अकस्माद्भवेन कौतुकातिरेकेण सन्तोषातिशयेन अस्तमिताः विनष्टाः समस्ताः अन्यव्यापाराः यस्य तथोक्तेन। **एकाग्रतया** ॥ ऐकाग्र्येण। **ग्रहनिरुद्धेन**। पूतनादिदुष्टग्रहाविष्टेनेव। **अन्धेन**। चक्षुर्विकलेन। **मूकेन**। वागिन्द्रियरहितेन। **मूढेन**। अज्ञेन। **मूर्छितेन**। सञ्जातमूर्छेन। **सञ्जातेति**। सञ्जातं सम्यक् (सर्वतः) तमः सन्तमसं यस्य तथोक्तेन। "अवसमन्धेभ्यस्तमसः" इत्यच्। **विषेति**। विषेण विघूर्णितेन विशेषभ्रम गतेन। **स्तोभेति**। स्तोभेन क्षोभेण मनोव्याकुलतयेति यावत्। स्तम्भीकृतेन जडीकृतेनेव च स्थितेन (मया) **अध्वनीनेन**। अध्वगेन। **आसितम्**। स्थितिः। भावे क्तः। अत्रोत्प्रेक्षालङ्कारः ॥

73. तदायुष्मन्नेष कथितः स्ववृत्तान्तः ॥

74. तस्यां दिशि तया सकलजगज्ज्योत्स्नया, अस्मिन्नपि देशे निःशेषजननयनकुमुदेन्दुना त्वया दृष्टेन, दृष्टं यद्द्रष्टव्यम् । अभूच्च मे श्लाघ्यं जन्म । जाते कृतार्थे चक्षुषी । संपन्नः सफलः परिभ्रमणप्रयासः॥

75. तदिदानीं किमन्यत् ॥

76. अनुमन्यस्व स्वविषयगमनाय माम्" इत्यभिधाय व्यरंसीत् ॥

77. राजाप्येतदाकर्ण्य चिन्तितवान् ॥

> श्रीमाणिक्यमहाकरः स विषयः पान्थोऽप्ययं तथ्यवा-
> ग्व्यापारोऽपि विधेर्विचित्ररचनस्तत्किं न सम्भाव्यते ।
> किं त्वाश्चर्यमदृष्टरूपविभवाप्याकर्ण्यमाना सती
> कान्तेत्युन्नतचेतसोऽपि कुरुते नाम्नैव निम्नं मनः ॥ ६१ ॥

73. तदिति ॥ आयुष्मन् । बहुल आयुर्यस्य तस्य, सम्बुद्धिः ॥

74–75. तस्यामिति ॥ सकलेति । सकलजगतां ज्योत्स्नया चन्द्रिकयेव स्थितया । निरिति । निश्शेषजनानां नयनानामेव कुमुदानां सितोत्पलानां इन्दुना चन्द्रेणेव स्थितेन । कृतार्थे । पर्याप्तप्रयोजने स्तः । परिभ्रमणप्रयासः। अटनश्रमः ॥

76—77. अन्विति ॥ अनुमन्यस्व । अनुजानीहि । विषयः । देशः। अभिधाय । उक्त्वा । व्यरंसीत् । विरमति स्म । "व्याङ् परिभ्यो रमः" इति परस्मैपदम् ॥

६१. श्रीति ॥ सः विषयः दक्षिणदेशः श्रीमाणिक्यानां श्रीरत्नानां महान् आकरः निधिः अयं पान्थः अध्वगोपि तथा ( सत्ये ) साधु तथ्यं सत्यं तद्युक्तावाग्यस्य तथोक्तः । विधेः धातुः व्यापारः सृष्टिः विचित्रा रचना क्रिया यस्य तथोक्तः । तत् तस्मात् किन्न सम्भाव्यते नानुमीयते उक्तमखिलं हेतुत्रयेणानुमीयत इत्यर्थः । अतएवानुमानालङ्कारः। किन्तु अदृष्टः रूपविभवः सौन्दर्यातिशयः यस्यास्तथोक्ताऽपि कान्ता कमनीया स्त्री आकर्ण्यमानासती ( किमुत दृश्यमाना ) उन्नतचेतसः गम्भीरमनसः पुरुषस्यापि मनः नाम्नैव शब्देनैव निम्नं लाघवास्पदं कुरुते । इत्येतदाश्चर्यम् । अत्रोत्तरार्धे तस्याश्श्रवणेन मम मनएव वर्तत इति प्रस्तुते विशे-

तथा हि ।

नो नेत्राञ्जलिना निपीतमसकृत्तस्याः स्वरूपामृतं
नो नामान्वयपल्लवोऽपि च मया कर्णावतंसीकृतः ।
चित्रं चुम्बति चुम्बकाश्मकमयो यद्वद्बलाद्दूरत-
स्तद्वत्तर्जितधैर्यमेतदपि मे तस्यां मनो धावति ॥ ६२ ॥

78. सोऽयं दुर्लभेष्वनुरागः पुंसाम्, अज्वरमस्वास्थ्यम्, अदौर्गत्यं दौःस्थ्यम्, अविषास्वादनमाघूर्णनम्, असाध्वसं कम्पनम्, अनात्मवि-

पेकथनीये अप्रस्तुतसामान्यकथनात् अप्रस्तुतप्रशंसालङ्कारः "अप्रस्तुतप्रशंसा स्यात् सा यत्र प्रस्तुताश्रया" इति तल्लक्षणात् । वृत्तं पूर्ववत् ॥

६२. नो इति ॥ मया तस्याः स्वं स्वीयं रूप आकृतिः यद्वा सौन्दर्यमेव अमृत सुधा असकृत् अनेकवारं नेत्रेणैव अञ्जलिना नो निपीतं न पीतं तस्याः अन्वयः वंश एव पल्लवः किसलयमपि मया नो कर्णावतंसीकृतः नाम नैव कर्णाभरणीकृतः न श्रुत इत्यर्थः । यद्वत् यथा दूरतः दूरे विद्यमान अयः लोहं कालायसं अश्मसारो वा ( मण्डूरमिति भाषायां ) चुम्बकाश्मकं अयस्कान्तशिलाविशेषं बलात् बलात्कारेण चुम्बति दृढं स्पृशति । तद्वत् तथा एतत् मे मनोपि तर्जितं भर्त्सितं त्यक्त मिति यावत् धैर्यं येन तथोक्त सत् तस्यां धावति जवेन गच्छति । इद चित्रम् । अत्र रूपकोपमे अलङ्कारौ । वृत्तं पूर्ववत् ॥

78. सोयमिति । पुंसां दुर्लभेषु ( वस्तुषु ) सोयं अनुरागः आसक्तिः अज्वरं अविद्यमानप्रकटज्वरम् । ( आन्तरं कामतापादिकमप्रकट कारणमस्त्येव ) अस्वास्थ्यं अस्वस्थता रुग्णतेति यावत् । अत्र विभावनामिलितः रूपकालङ्कारः । एवमुत्तरत्रापि । विभावनालक्षणन्तु—" विभावना विनापि स्यात् कारण कार्यजन्मचेत् " इति । अदौर्गत्य अविद्यमानदारिद्र्य दौःस्थ्यं कष्टास्थितिः । अविषास्वादनं विषभक्षणाहेतुकम् । आघूर्णन भ्रमण असाध्वसं भयाहेतुक कम्पनं चलनं अनात्मविक्रय आत्मविक्रयाहेतुकं पारवश्यं पराधीनता । अजरं ॥ जरावस्थित्यजन्यं । जाड्यम् । "इष्टंवानिष्टंवा सुखदुःखवान वेत्त यो मोहात् । परवशगः सभवेदिह जडसंज्ञकः पुरुषः" इत्युक्तलक्षणः जडः तस्य कर्म जाड्यम् ॥

क्रयं पारवश्यम्, अजरं जाड्यम्, अनिन्धनं ज्वलनम्, अलग्नग्रहमुन्मादनम्, अवात्याघातमुद्भ्रमणम्, अमौनं मौक्यम्, अहीनश्रुति बाधिर्यम्, अनष्टदृष्टिकमन्धत्वम्, अस्खलितमनोरथम्, मनःस्तम्भनम्, अमन्त्र आवेशः ॥

79. सर्वथा नमः सुस्थितजनदुर्जनाय मनोजन्मने, यस्यायमेवंविधो व्यापार इत्यवधारयन्नवतार्य सर्वाङ्गेभ्यो भूषणानि तस्मै सदयमदात् ॥

80 तैस्तैरालापैः स्थित्वा च कंचित्समयमिममथ यथाप्रस्थितं पान्थं कथमपि प्रेषयामास ॥

81 स्वयमपि तत्कालान्तरालमिलितैर्नक्षत्रैरिव सार्द्रमृगशिरोहस्तैः सश्रवणचित्रकृत्तिकोपस्करवाहिभिः पापर्द्धिकपरिजनैरनुगम्यमानो राजा निजावासमयासीत् ॥

**अनिन्धनं** ॥ एधोरहितं । ज्वलनं दीप्तिः । अलग्नग्रहं । असंसक्तपूतनादिदुष्टग्रहं । उन्मादनं चित्तभ्रमः । अवात्याघातं । वातानां समूहः वात्या तया घातः पीडा तद्रहितं । उद्भ्रमण अधिकंघूर्णनं । अमौनं अभाषणरहितं । मौक्यं मूकत्वं । अहीनश्रुति । अहीना अरहिता श्रुतिः श्रवणं यस्मिंस्तथोक्तं । बाधिर्यं बधिरत्वं । अनष्टा दृष्टिर्यस्मिंस्तत् अन्धत्वं अस्खलिताः भ्रेषरहिताः मनोरथाः यस्मिंस्तथोक्तं मनसः स्तम्भनं स्तब्धता अमन्त्रः निवर्तकमन्त्ररहितः आवेशः भूतावेशनम् ॥

79. **सर्वथेति । सुस्थितेति** ॥ सुखेन स्थितेषु जनेषु दुर्जनाय । **मनोजन्मने** । कामाय । **अवधारयन्** । निश्चिन्वन् । **अवतार्य** ॥ उन्मोच्य । **सदयं** । सकृप ॥

80. **तैरिति । आलापैः** ॥ मिथोभाषणैः । **समयं** । कालं । **यथाप्रस्थितं** । प्रस्थितं यात्रा (भावे क्तः) तदनतिक्रम्य ॥

81. **स्वयमिति** ॥ राजा नलः चन्द्रोपि स्वयमपि तत्कालं तत्क्षणं अन्तराले मार्गमध्ये मिलितैः सङ्गतैः । तस्मिन् ज्योतिःप्रसिद्धे काले (अष्टशतीलक्षणे) कलासमूहे यदन्तरालं तत्र मिलितैश्च । नक्षत्रैरिव । आर्द्रैः मृगाणां हरिणानां शिरोभिः सहिताः हस्ता येषान्तथोक्तैः । पक्षे आर्द्रया (नक्षत्रेण) सह मृगशिरः हस्तश्च (नक्षत्रं) येषु । सश्रवणां सकर्णां चित्रस्य चित्रकमृगस्य कृत्तिकां

ततः प्रभृति च

हृद्योद्यानमरुत्तरङ्गितसरित्तीरे तरूणामध-
स्तल्पेऽनल्पसरोजिनीनवदलप्रायेऽपि खिन्नात्मनः ।
धीरस्यापि मनाङ्मनस्तृणकुटीकोणान्तराले बला-
ल्लग्नोऽस्येति विभाव्यते परवशैरङ्गैरनङ्गानलः ॥ ६३ ॥

एवमस्य

पुनरपि तदभिज्ञान्पृच्छतः पान्थसार्था-
न्प्रतिपथमथ यूनो यान्ति तस्य क्रमेण ।

स्वच्चं उपस्करं मृगयोपयोगिसभारं यद्वा वासनाद्रव्यविशेषश्च वहन्तीति तच्छीलैः श्रवणचित्राभ्यां (नक्षत्राभ्यां) सहिताः कृत्तिकाः (नक्षत्राणि) तासां उपस्करं समवायं वहन्तीति तच्छीलैश्च । पापानां ऋद्धिः (वृद्धिः) यस्यां सा पापर्धिः मृगया सा शीलं एषान्ते पापर्धिकाः"शीलं" इति ठक् । ये परिजनाः तैः अनुगम्यमानस्सन् । निजं आवास वारास्थानं अयासीत् प्राप्तवान् ॥

६३. **हृद्येति** ॥ हृद्यस्य हृदयप्रियस्य उद्यानस्य आरामस्य मरुता वातेन तरङ्गितायाः चञ्चलायाः सरितः नद्याः तीरे तरूणां वृक्षाणां अधः अधस्तात् अनल्पैः महद्भिः सरोजिन्याः पद्मिन्याः नवदलैः नूतनपत्रैः प्राये बहुले तल्पे शय्यायामपि खिन्नात्मनः आयस्तमनसः धीरस्य धैर्यवतोपि अस्य नलस्य मनाक् किञ्चित् अणु इति यावत् मनः एव तृणरचिता कुटी कुटीरं तस्याः कोणस्य एकदेशस्य अन्तराले मध्ये बलात् अनङ्गानलः कामाग्निः लग्नः संबद्धः इति परवशैः अस्वाधीनैः अङ्गैः अवयवैः विभाव्यते अनुमीयते । अत्रानुमानालंकारः "साध्यसाधननिर्देशेत्वनुमानमुदीर्यते" इति तल्लक्षणात् । शार्दू.... .वृत्तं ॥

६४. **पुनरिति** । अथ पुनरपि तां राजकन्यां अभिजानन्तीति तदभिज्ञास्तान् पान्थसार्थान् पथिकसङ्घान् पथिपथि प्रतिपथं प्रतिमार्गं। प्रतिपदामिति पाठे प्रतिक्षणमित्यर्थः । पृच्छतः। हरस्य शिवस्य चरणसरोजद्वन्द्वस्य पादपद्मद्वयस्य मुद्रा बोधकविन्यासविशेषः अङ्कः चिह्न यस्य तथोक्तः मौलिः किरीट यस्य तथोक्तस्य यूनः

हरचरणसरोजद्वन्द्वमुद्राङ्कमौले-
र्मदनमदनिवासा वासराः प्रावृषेण्याः ॥ ६४ ॥

इति श्रीत्रिविक्रमभट्टविरचितायां दमयन्तीकथायां हर-
चरणसरोजाङ्कायां प्रथम उच्छ्वासः समाप्तः ॥

तस्य नलस्य मदनमदस्य काममदस्य निवासाः प्रावृषि (वर्षासु) भवाः प्रावृषेण्याः "प्रावृषएण्यः" इत्येण्यः। वासराः दिनानि क्रमेण यान्ति॥ अनुप्रासोनामशब्दालकारः। मालिनीवृत्तं॥

**इतीति। हरचरणसरोजांकायां।** प्रत्युच्छ्वासं अन्ते हरचरणसरोजपदं अंक यस्यान्तस्यां॥

श्रीनलचपूप्रथमोच्छ्वासं नारायणाभिधोविद्वान्। परिमलसंज्ञव्याख्यासुरभितमतनुत सिताटवीवासी॥

**इति चेन्नपत्तनविराजमानपच्चयप्पपाठशालासंस्कृताध्यापक श्वेतारण्यनारायणशास्त्रिविरचिता नलचम्पू प्रथमोच्छ्वासव्याख्या परिमलाख्या पूर्तिमागता.**



## अथ द्वितीय उच्छ्वासः



अथ कदाचिदवगलद्बहलपरिमलमिलदलिकुलाकुलितकुटजकदम्ब-कुसुमकर्णपूरशून्यकाननासु, विश्राम्यन्मदमुखरमयूररसनावलीकलक्वणि-तासु, विरलतरतडिल्लताललितलावण्यासु, विगतहंसद्विजराजिषु, पतत्प-योधरासु, क्षीणशुक्रासु, वृद्धास्विव गतप्रायासु वर्षासु, रतिमकुर्वाणो मदकलकलहंसहासहारिण्यामुत्सुकस्तरुण्यामिवागतायां शरदि, द्विरद-

१. **अथेति** । **अवगळदिति** । अवगलन्ति स्रंसमानानि बहलपरिमलात् (हेतोः) मिलद्भिः सङ्गच्छमानैः अलिकुलैः भृङ्गसमूहैः आकुलितानि कुटजकदम्बकुसुमानि तैरेव कर्णपूरैः अवतंसैः ( पक्षे तैः कर्णपूरैश्च) शून्यम् काननम् वनम् यासु तासु (पक्षे शून्यम् कम् शिरः आननम् मुखञ्च यासाम्) यद्वा अवगलन्तः विरलाभवन्तः बहल...कर्णपूराः यस्मिंस्तत् अवगल...पूरम् अत एव शून्यम् शून्यप्रायम् काननम् वनम् कम् आननञ्च यासु यासाञ्च तासु । **विश्राम्यदिति** । विश्राम्यत् विरमत् मदेन मुखराणाम् शब्दायमानानाम् मयूराणाम् पक्षे मयूराणामिव रसनावल्याः जिह्वापङ्क्त्याः पक्षे काञ्चीश्रेण्याः " रसनाकाञ्चिजिह्वयोः " इति विश्वः । कलक्वणितम् मधुरध्वनिर्यासु यासाञ्च तासु । **विरलेति** । विरलतरम् अत्यन्तमल्पम् तटिल्लतानाम् विद्युल्लतानाम् पक्षे तटिल्लतानामिव ललितलावण्यम् रम्यकान्तिः पक्षे ललितम् मधुराङ्गविन्यासः लावण्यम् कान्तिविशेषश्च यासु यासाञ्च तासु । **विगतेति** । व्यपेतहंसपक्षिपङ्क्तिषु पक्षे व्यपेतहंसशुभ्रदन्तराजिषु । **पतदिति** । नश्यद्घनासु पक्षे निपतत्कुचासु । **क्षीणेति** । क्षीणशुक्राख्यग्रहासु पक्षे क्षीणम् गर्भसम्भवाभावाद्विनष्टम् शुक्रम् पुंवीर्यं यासु तासु । **वृद्धास्विव** । जरतीष्विव । **गतप्रायासु** । प्रायेण बाहुल्येन गतासु स्वल्पशेषास्विति यावत् । ' प्रायोमरणानशनेमृत्यौ बाहुल्यतुल्ययोः ' इति मेदिनी । पक्षे गतः प्रायः वयः यासान्तासु ' प्रायावयांसि ' इति वैजयन्ती । **वर्षासु** । प्रावृषि । ' अप् सुमनस् समासिकता वर्षाणाम् बहुत्वञ्च' इत्यनेन बहुत्वम् । **रतिम्** । चित्तासक्तिम् सम्भोगञ्च । **अकुर्वाणः** । अकुर्वन् । **मदेति** । मदेन कलाः मयूराः कलहंसाएव हासस्तेन हारिण्याम् रम्यायाम् पक्षे मदेन क्षीबतया कलकलः हर्षध्वनिर्यस्यास्सा मदकलकला हंसोपमौ हासहारौ अस्यां स्त इति हंसहारिणीच तस्याम् । **तरुण्याम्** । अभिनवप्रवृत्तायाम् । युवत्यामिव च । **आगतायां** । प्राप्तायां पक्षे रागात् स्वयं प्राप्तायां । **शरदि** ।

मदगन्धसंबन्धानुधाविते कुसुमितसप्तच्छदच्छायासु विस्फूर्जति रोषोद्धुषितकेसरकरालकण्ठे कण्ठीरवकदम्बके, गृहदीर्घिकामृणालिकाकाण्डखण्डनविरामरमणीयमुन्नदत्सु शरत्समयप्रवेशमङ्गलमृदङ्गेष्विव हंसमण्डलेषु, स्मरशरनिकरनिर्मथितपान्थसार्थप्रहाररुधिरनिष्यन्दबिन्दुसंदोह इव वनस्थलीषून्मिषति बन्धुरबन्धूककुसुमप्रकरे, प्रसरन्तीषु शरल्लक्ष्मीप्रवेशानन्दवन्दनमालासु निःशङ्कशुककुलावलीषु, श्रूयमाणासु स्मरराजराज्यविजयघोषणासु पक्वकलमगन्धशालिपालिकाबालिकाहर्षगीतिषु, शरच्छ्रीकटाक्षेषून्मीलत्सु नीलनीरजेषु, क्वणति वर्षावधूप्रस्थानपटहे षट्चर-

शरद्दतौ। **उत्सुकः** । उत्कः । **सः महीपतिः** । नलः । **कुसुमितेति** । कुसुमितानां ( शरदि ) सञ्जातपुष्पाणां सप्तच्छदानां ( मदगन्धसमानगन्धानां ) सप्तच्छदवृक्षाणां छायासु । **द्वीति** । द्विरदानां गजानां मदस्य दानजलस्य गन्धस्य संबन्ध इति (भ्रान्त्या) अनुधाविते। अत एव **रोषेति** । रोषेण कोपेन उद्धुषितैः शब्दितैः उद्धूतैर्वा केसरैः सटाभिः करालः दन्तुरः भयानको वा कण्ठः यस्य तथोक्ते। **कण्ठीति**। सिंहवृन्दे । **विस्फूर्जति** । गर्जतिसति । **शरदिति**। शरत्समयप्रवेशाय मङ्गलमृदङ्गेषु कल्याणमुरजेष्विव । **हंसमण्डलेषु** । हंससमूहेषु । **गृहेति** । गृहदीर्घिकायां गृहपद्मिन्यां मृणालिकाकाण्डस्य बिसदण्डस्य खण्डनस्य छेदनपूर्वकचर्वणस्य विरामे अवसाने रम्य (बिसचर्वणशुद्धकण्ठत्वात्) मधुरं यथा तथा । **उन्नदत्सु** । शब्दायमानेषु **स्मरेति** । स्मरशराणां निकरेण समूहेन निर्मथितानां ताडितानां पान्थसार्थानां पाथिकसङ्घानां प्रहारात् प्रहारस्थलात् ये रुधिरनिष्यन्दाः रक्तस्रावाः तेषां बिन्दूनां सन्दोहस्समूहस्तस्मिन्निव स्थिते । **बन्धुरेति** । बन्धुराणां निबिडानां बन्धूककुसुमानां रक्तसवर्णानां बन्धुजीवपुष्पाणां प्रकरे समूहे । **वनस्थलीषु** । अकृत्रिमवनभूमिषु "जानपद" इत्यादिना अकृत्रिमार्थे स्थलशब्दात् ङीप् । ( कृत्रिमातु स्थला ) **उन्मिषति** ॥ विकसतिसति । **शरदिति** । शरल्लक्ष्मीप्रवेशे आनन्देन ( प्रवृत्तासु ) वन्दनमालासु तोरणमालिकासु । **निरिति** । निश्शंकानां निर्भीकाणां शुककुलानां आवलीषु । **प्रसरन्तीषु** । प्रचलन्तीषु सतीषु । **स्मरेति** । कन्दर्पराजस्य राज्यजयप्रकटनध्वनिष्विव स्थितासु । **पक्वेति** । पक्वाः कलमाः कलापकाख्यशालिविशेषाः गन्धशालयः सुगन्धिकाख्यशालयः तेषां पालिकाः रक्षिकाः तासां याः बालिकाः तासां हर्षगीतिषु श्रूयमाणासुसतीषु । शराच्छ्रियाः कटाक्षेष्विवस्थितेषु॥ **नीलनीरजेषु**॥ नीलोत्पलेषु।उन्मीलत्सु विकसत्सु । वर्षाः प्रावृडेव वधूः

णचक्रवाले, प्रभात इव घनतिमिरविरामरमणीये जाते जलनिधिशयनशायिशार्ङ्गिनिद्राद्रुहि विनिद्रसान्द्रसरससरोजराजिराजितसरसि शरत्समये, स महीपतिः समासन्नवनविहारिकिंनरमिथुनेन गीयमानमिदमनश्लीलं श्लोकत्रयमश्रृणोत् ॥

धन्याः शरदि सेवन्ते प्रोल्लसच्चित्रशालिकान् ।
प्रासादान्स्त्रीसखाः पौराः केदारांश्च कृषीवलाः ॥ १ ॥
नमिताः फलभारेण न मिताः शालिमञ्जरीः ।
केदारेषु हि पश्यन्तः के दारेषु विनिःस्पृहाः ॥ २ ॥

तस्याः प्रस्थानपटहे प्रयाणानकतुल्ये । चट्चरणानां भ्रमराणां चक्रवाले समूहे । क्वणति । नदति सति । प्रभाते प्रातःकालइव । घनानां मेघानामेव अन्यत्र निबिडानां तिमिराणां विरामेण विरत्या रमणीये रम्ये । जलनिधिशयनशायिनः शार्ङ्गिणः विष्णोः निद्रायै द्रुह्यतीति तथोक्ते । ( शरदि विष्णुः प्रबुध्यते इति शास्त्रादिति भावः ) अन्यत्र जलनिधिवत् ( विस्तृतं ) शयनं तत्र शेरते ताच्छील्येनेति तथोक्ताः ये शार्ङ्गिणः धनुष्मन्तः ( सर्वेषामुपलक्षणमिदम् ) तेषां निद्राद्रुहि । विनिद्राणां विकसितानां सान्द्राणां सरसानां स्निग्धानां सरोजानां राजिभिः ततिभिः राजितं शोभित सरः यस्मिंस्तथोक्ते । ( इदं शरत्प्रभातयोः तुल्य ) शरत्समये । जाते उद्भूते सति । समासन्ने प्रत्यासन्ने वने विहरणशीलयोः किंनरयोः देवविशेषयोः मिथुनेन द्वन्द्वेन । गीयमानम् । इद वक्ष्यमाणं अनश्लीलं अग्राम्यं श्लोकत्रयम् । अश्रृणोत् ॥

**धन्या इति** ॥ शरदि धन्याः पौराः स्त्रीणां सखायः स्त्रीसखाः स्त्रीयुक्तास्सन्तः "राजाहस्सखिभ्यः" इति टच् । प्रोल्लसन्त्यः प्रकर्षेण राजमानाः चित्रशालिकाः आलेख्यभूमिकाः येषु तान् प्रासादान् हर्म्याणि सेवन्ते । धन्याः कृषिरेषामस्तीति कृषीवलाः कर्षकाः "रजः कृषि" इत्यादिनावलच् । स्त्रीसखास्सन्तः प्रोल्लसन्तः चित्राः बहुविधाः शालयः येषु तान् केदारान् सस्यक्षेत्राणि च सेवन्ते आश्रयन्ति । तुल्ययोगितालङ्कारः ॥ १ ॥

**नमिता इति** ॥ केदारेषु क्षेत्रेषु फलानां व्रीहीणां भारेण नमिताः अवनतिं गमिताः नमिताः अनल्पाः शालीनां मञ्जरीः वल्लरीः पश्यन्तः के दारेषु भार्यासु विशेषेण निस्पृहाः निरभिलाषाः भवन्ति न केपीत्यर्थः । फलसमृद्धकेदारदर्शनेन निरायासकुटुम्बभरणमवगच्छन्तः दारादिस्पृहावन्त इत्यर्थः । हि पादपूरणे । अत्र व्यवहितंमिश्रपादादियमकं ॥ २ ॥

प्रावृषं शरदं चापि बहुधाकाशहारिणीम् ।
विलोक्य नोत्सुकः कः स्यान्नरो नीरजसङ्गताम् ॥ ३ ॥

२. अनेन मृदुमूर्छनातरङ्गरङ्गिताक्षरेण श्रवणपथप्रथमप्रियातिथिना श्लोकत्रयेण विषविषमविषयवैर तिकठिनकुठारेण, दारपरिग्रह-पराङ्मुखोऽपि शृङ्गारशृङ्गिशृङ्गमुत्तुङ्गमारोप्यमाणस्तदेवोद्यानममन्दमन्दा-रमकरन्दामोदमत्तमधुकरमधुरझंकाररमणीयमुपसर्तुमारभत ॥

३. प्रथमसंमुखप्रेङ्खितेन चलच्चन्दनामोदनन्दिनान्दोलनवेगवित्रस्त कुसुमिततरुशिखरसुप्तसुरतश्रमखिन्नकिंनरीनिबिडतरपरिरभ्यमाणकिंनर-नमस्कृतेन क्रीडाकमलदीर्घिकातरङ्गोत्सङ्गरङ्गत्तरुणतामरसरसविसरो-

**प्रावृषमिति** ॥ आकाशस्य गगनस्य हारिणीं हरणशीलां तिरोधायिनीमिति यावत् नीरजस पांसुरहितां गतां अतिक्रान्तां प्रावृषं वर्षाकाल काशैः काशपुष्पैः हा-रिणीं रम्याम् । नीरजैः कमलैः सङ्गतां युक्तां शरदञ्च बहुधा पुनः पुनः विलोक्य कः नरः उत्सुकः उत्कः न स्यात् सर्वोपि स्यादिति भावः अत्र सश्लेषस्तुल्ययोगि-तालङ्कारः ॥ ३ ॥

२. **अनेनेति** ॥ मृद्व्याः ललितायाः मूर्छनायाः एकविंशतिभेदयुक्तायाः स्वरमूर्छावस्थायाः तरङ्गेण विच्छित्तिविशेषेण रङ्गितानि ज्ञातानि सञ्जातनृत्यानि वा-अक्षराणि यस्य तथोक्तेन । श्रवणपथस्य कर्णमार्गस्य प्रथमः प्रियश्च अतिथिः अ-भ्यागतस्तत्तुल्येन विषवत् विषमा प्रतिकूलोदर्काः ये विषयाः शब्दादयः तेषु वैर-स्यं अप्रीतिरेवव्रतं नियमः तदेव व्रततिर्लता तस्याः (छेदने) कठिनकुठारेण ती-क्ष्णपरशुना अनेन पूर्वोक्तेन श्लोकत्रयेण दारपरिग्रहे परिणये पराङ्मुखः (श्लोकश्रव-णात्पूर्वं) विमुखोपि । उत्तुङ्ग उन्नतं शृंगार एव शृंगी गिरिः तस्य शृंग शिखरं आरोप्यमाणः आरूढः क्रियमाणः (नलः) अमन्दानां अनल्पानां मन्दाराणां पारि-जातानां मकरन्दानां-पुष्परसानां आमोदेन परिमलेन मत्तानां मधुकराणां भृङ्गाणां मधुरझङ्कारेण रमणीय तदेव उद्यान उपवनं उपसर्तुं गन्तु आरभत आरब्धवान् ॥

३. **प्रथमेति** ॥ प्रथमं सम्मुखं प्रेङ्खितेन चालितेन चलतां चन्दनानां चन्दन-वृक्षाणां आमोदेन परिमलेन नन्दयितुं आनन्दयितुं शीलमस्येति तथोक्तेन आन्दो-लनवेगेन चलनवेगेन वित्रस्तया भीतया कुसुमिततरुशिखरे(पूर्वं) सुप्तया सुरतश्रम-खिन्नया सम्भोगायासश्रान्तया किन्नर्या निबिडतरं दृढतरं यथा तथा परिरभ्यमा-णेन आलिङ्ग्यमानेन किन्नरेण नमस्कृतेन (किन्नरीस्वयमाश्लेषस्य हेतुभूततया वायोः

द्वारहारिणा यौवनमदनिरुद्धनैषधी          रीचलनविलासलासकेन वनमारुतेनोत्पुलकिततनुः स्तोकमन्तरमतिक्रम्य "देव, भवद्वैरिवधूवदने वने च नारङ्गतरूपशोभे भान्ति गण्डशैलस्थलालंकारधारिण्यो लोध्रलताः, नागरुचिताश्चन्दनपत्रभङ्गाः, नालिकेरचितास्तिलकः, नवा दृष्टिपथमवतरति घनाञ्जनयष्टिका, नाभिरम्या नीलतमालकाः, नाधरीकृतस्ताम्बूलीरागः, पल्लवितमेतद्दृश्यतेशोकजालम्। इतश्च काञ्चनागि-

र्नमस्कार इति भावः) क्रीडार्थायाः कमलदीर्घिकायाः पद्मिन्याः तरङ्गोत्सङ्गे वीचिमध्ये रङ्गतां चलतां तरुणतामरसानां प्रौढपद्मानां रसविसरस्य मकरन्दझर्याः उद्गार निष्यन्द हरतीति ताच्छिलेन। यौवनमदेन निरुद्धानां आवृतानां निषधेषु भवाः नैषध्यः निषधदेशस्त्रियः तासां धम्मिल्लाः संयताः कचाः त एव वल्ल्यः मञ्जर्यः तासां चलनविलासे कम्पनलीलायां लासकेन नर्तकेन वनमारुतेन वनवायुना उत्पुलकिता अधिक रोमाञ्चिता तनुर्देहः यस्य सः नलः स्तोकं किञ्चित् अन्तरं अन्तरालं अतिक्रम्य अतिलङ्घ्य गत्वेत्यर्थः। देव प्रभो नल अर अत्यर्थं गता नष्टा रूपस्य आकृतेः शोभा कान्तिर्यस्य तस्मिन् भवतः वैरिवधूनां शत्रुस्त्रीणां वदने मुखे गण्डशैलस्थलस्य शैलवत् विशालस्य कपोलप्रदेशस्य अलंकारं धारयन्तीति तच्छीलाः लोध्रस्य विलेपनरूपस्य लताः मण्डनवल्यः न भान्ति। नारङ्गतरुभिः उपशोभिते वने च गंडशैलानां सहजच्युतस्थूलपाषाणानां स्थलस्य अलङ्कारधारिण्यः लोध्रस्य तरुविशेषस्य लताः शाखाः भान्ति। अगरुणा कालागरुद्रवेण चिताः व्याप्ताः चन्दनस्य चन्दनद्रवस्य पत्रभंगाः पत्रवल्यः वदने न भान्ति नागेभ्यः सर्पेभ्यः रुचिताः इष्टाः चन्दनस्य चन्दनतरोः पत्राणां छदानां भङ्गाः विशेषाः वने भान्ति। अलिके ललाटे तिलकः पुण्ड्र न रचितः नकृतः नालिकेरवृक्षैः चितः व्याप्तः तिलकवृक्षः वने भाति। घनस्य निबिडस्य अञ्जनस्य कज्जलस्य यष्टिका शलाका दृष्टिपथं नेत्रमार्गं नावतरति नगच्छति च वाकारस्समुच्चये। नवा नूतना घना निबिडा अञ्जनस्य अञ्जनवृक्षस्य यष्टिका प्रकाण्डः वने भाति। अभिरम्याः अतिशयेन नीलाः नीलतमाः अलकाः कुन्तलाः वदने नभान्ति नाभयः प्रधानाः रम्याश्च यद्वा नाभिदघ्नाः रम्याश्च नीलाः (ह्रस्वाः तमालाः) तमालकाः वने भान्ति। तांबूलीनां नागवल्लीनां रागः रिक्तमा अधरः अस्यास्तीति अधरी ओष्ठसबद्धः नकृतः इति वदने। वनेतु तांबूलीलतानां रागः सम्बन्धः अधरीकृतः हीनीकृतः न। एतत् शोकानां दुःखानां जाल बृन्द यद्वा शोकजं अल अनर्थः पल्लवितं (लक्षणया) वृद्धं वनपक्षे अशोकवृक्षबृन्दं सञ्जातकिसलयं दृश्यते। **इतश्च**। अत्र च। **सुरचितः**। सुष्ठुरचितः

रिरिव सुरचितः क्रीडापर्वतः । इतश्च गूर्जरकूर्चमिवाखण्डितप्रवालं बालसालवनम् । इतश्च भवद्वैरिनगरमिवानेकविधवकुलसंकुलं कूपकूलम् । इतश्च धूर्जटिजटाजूट इव पुंनागवेष्टितो वापीपरिसरः । इतश्च कुरुसेनेव कृताश्वत्थामाहिता च क्रीडासरित्पुलिनपालिः । " इति भङ्गश्लेषोक्तिकुशलया वनपालिकया निवेद्यमानानि वनविनोदस्थानान्यवलोकयांचकार ॥

४. चलच्चकोरचक्रवाकचक्रचञ्चुचञ्चलचञ्चरीकचरणचूर्णितचम्पकाङ्कुरमरिचमञ्जरीदलदन्तुरेण वनमार्गेण स्तोकमन्तरमतिक्रान्तस्तया पुनरेवं बभाषे ॥

५. " देव, पुरंदरानन्दिनन्दनोद्यानस्पर्धिनोऽस्य वनस्य किं किं च

सुरैः चितः व्याप्तश्च । **इत इति** ॥ बालानां सालानां सर्जतरूणां वन गूर्जराणां कूर्चमिव श्मश्रुवत् अखण्डिताः प्रवालाः पल्लवाः अन्यत्र प्रवृद्धा वालाः केशाः यस्यतत् । **अनेकेति** ॥ अनेकविधैः वकुलैः वञ्जुलैः पक्षे अनेकाः विधवाः मृतभर्तृकाः येषु तैः कुलैर्गोत्रैः सङ्कुलं निबिडं । **कूलं** । तीरं । **इत इति** । वाप्याः दीर्घिकायाः परिसरः समीपदेशः धूर्जटेः शिवस्य जटाजूटः कपर्द इव पुन्नागैः पुन्नागवृक्षैः पुंसा नागेन वासुकिना च वेष्टितः संवृतः । **इतश्चेति** ॥ क्रीडासरितः क्रीडार्थकृतायाः नद्याः पुलिनानां सैकतानां पालिः पङ्क्तिः । कुरूणां सेनेव कृताः उत्पादिताः अश्वत्थाः चलदलाः यस्यां सा कृताश्वत्था महिता पूजिता च पक्षे कृतं अश्वत्थाम्ने द्रौणये हितं यया तथाभूता । **भङ्गेति** । भङ्गः भिन्नभिन्नपदच्छेदः तत्पूर्वकः यः श्लेषः अर्थद्वयसम्बन्धः तद्युक्तायां उक्तौ वचने कुशलया निपुणया । भङ्गश्लेपालङ्कारलक्षणमुक्तं प्राक् । वनपालिकया । वनरक्षिण्या । निवेद्यमानानि विज्ञाप्यमानानि वने विनोदार्थानि विश्रान्त्यर्थानि स्थानानि अवलोकयाञ्चकार ददर्श ॥

४. **चलदिति** ॥ चलतां चकोराणां चक्रवाकाणाञ्च चक्रस्य मण्डलस्य चञ्चुभिः त्रोटिभिः चञ्चलानां चञ्चरीकाणां भ्रमराणां चरणैश्च चूर्णितानां चंपकांकुराणां चापेयप्ररोहाणां । म्रियते विषमनेनेति मरिचं कृष्णं (मोळकु इतिभाषायां) तस्य मञ्जरीणां दलैः पत्रैश्च दन्तुरेण निबिडेन । **तया** । वनपालिकया । **बभाषे** । उक्तं ॥

५. **देवेति । पुरमिति ।** पुरन्दरमिन्द्रं आनन्दयतीति तच्छील नन्दनाख्यमुद्यानं स्पर्धते अभिभवितु मिच्छतीति तच्छीलस्य।

६. यत्र । त्रिजटाश्रयमनेकजटाः स्फुरदेकपुष्पकमनेकपुष्पाः समुद्वेजितराममानन्दितरामाः, समुपहसन्ति लङ्केश्वरं तरवः ॥

७. यस्मिंश्च मत्तमयूरहारिणि भद्रभुजंगप्रयाते विचित्रक्रौञ्चपदे छन्दःशास्त्र इव वैतालीयं मालिनी शिखरिणी पुष्पिताग्रा च दृश्यते [वि]धा जातिः ॥

८. यस्मिंश्च । एकभीमार्जुनविनिर्जितानाक्रान्तानेकभीमार्जुनाः, नैकनकुलानाह्लादितानेकनकुलाः, सहदेवेनैकेन स्पर्धमानाननैकैः

६. यत्रेति । यत्र वने अनेकाः जटाः मूलानि येषान्ते । अनेकानि पुष्पाणि येषु ते । आनन्दिताः रामाः स्त्रियः यैस्ते । तरवः तिसृणां जटानां मूलानां त्रिजटायाः तदाख्यायाः निजस्वसु. आश्रयं । स्फुरत् लसत् एक पुष्पं कुसुमं पुष्पकयानञ्च यस्मिंस्तं उद्वेजिताः भीषिताः रामाः स्त्रियः उद्वेजितः क्लेशितः रामः दाशरथिर्येन तं । लङ्केश्वर रावण सम्यगुपहसन्ति परिहसन्ति ॥

७. यस्मिन्निति ॥ छन्दसां उक्तादिछन्दसां लक्ष्यलक्षणादिप्रतिपादके शास्त्रे पिङ्गलसूत्रादाविव मत्तैर्मयूरैः मत्तमयूरवृत्तेन च हारिणि रम्ये । भद्रं रम्य भुजङ्गानां सर्पाणां विटानां वा प्रयात गमन अन्यत्र भुजङ्गप्रयातवृत्तं यत्र तस्मिन् । विचित्राणां क्रौञ्चानां क्रौञ्चपक्षिणां पदे स्थाने अन्यत्र विचित्रा क्रौञ्चपदा तदाख्यवृत्तं यत्र तस्मिन् । यस्मिन् वने । ( वनपक्षे वै ताली इयं इति पदच्छेदः ) इय विविधा ताली तालद्रुमः विविधा जातिः मालती च माला पङ्क्तिः अस्यामस्तीति मालिनी । शिखरिणी शिखरयुक्ता पुष्पितानि अग्राणि यस्यास्सा पुष्पिताग्रा च दृश्यते । छन्दश्शास्त्रे तु वैतालीयवृत्त मालिनीवृत्त शिखरिणीवृत्तं पुष्पिताग्रावृत्त इति । विविधा अनेकविधा जाति. ( उक्तादि उत्कृत्यन्तं ) छन्दः दृश्यते । "जातिश्छन्दसि सामान्ये मालत्यां गोत्रजन्मनोः ।" इति विश्वः । मत्तमयूरादिलक्षणन्तु "वेदैरन्ध्रैर्म्तौ यसगा मत्तमयूरम् । भुजङ्गप्रयात भवेद्यैश्चतुर्भिः । क्रौञ्चपदाभ्मौ सभौ नननानगौ पुनिशरवसुशरविरतियुता । षड्विषमेष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः । नसमा ... रलौगुरुः । ननमययुतेयम्मालिनी भोगिलोकैः । रसैरुद्रैश्छिन्नायमनसभलागश्शिखरिणी । अयुजिनयुगरेफतोयकारो युजिचनजौ जरगाश्च पुष्पिताग्रा ।" इति ॥

८. यस्मिंश्चेति । यस्मिन्वने । आक्रान्ताः आरूढाः निर्जिताश्च अनेके भीमाः अम्लवेतसाः भीमसेनाश्च "भीमोऽम्लवेतसेशम्भौ घोरेवापि वृकोदरे" इति विश्वः । अर्जुनाः ककुभवृक्षाः पार्थाश्च भाभिस्ताः । आह्लादिताः आनन्दिताः अनेके नकुलाः

सहदेवैः संगताः । न बहु मन्यन्ते कुरुवीरान्वीरुधः ॥

किं चान्यदवलोकयतु देवः ।

पटलमलिकुलानामुन्नमन्मेघनीलं
भ्रमदुपरि तरूणां पुष्पितानां विलोक्य ।
मृदुमदकलकेकानिर्भरो नृत्यसक्त-
स्तरलयति कलापं मन्दमन्दं मयूरः ॥ ४ ॥

अपिच ।

भ्राम्यद्द्विरेफाणि विकासभाञ्जि
संयोज्य पुष्पाणि शिलीमुखेषु ।
इह स्थितः सर्वजगज्जयाय
धनुःश्रमं पुष्पशरः करोति ॥५॥

सर्पशत्रवः माद्रीज्येष्ठपुत्राश्च याभिस्ताः । अनेकैः । देवैः "एते वै गन्धर्वाप्सरसां गृहाः" इत्युक्त्वा तदावासभूतेषु खेषु निवसद्भिर्गन्धर्वादिभिः सहिताः सहदेवास्त-रवः नकुलानुजाश्च तैस्सङ्गता युक्ताः वीरुधः लताः । एकेन भीमेन पाण्डवेन अर्जुनेन पाण्डवेन च विनिर्जितान् कोपितः एकः नकुलः पाण्डवः यैस्तान् । एकेन सहदेवेन पाण्डवेन स्पर्धमानान् स्पर्धांकुर्वतः । कुरुवीरान् दुर्योधनादीन् न बहुम-न्यन्ते न गौरवयन्ति ॥ अत्र त्रिजटाश्रयमिति गद्ये च श्लेषः काव्यलिङ्गं व्यति-रेकश्चालङ्काराः ॥

**पटलमिति** ॥ उन्नमन् उच्छ्रयन् मेघइव नीलं श्यामं पुष्पितानां सञ्जा-तकुसुमानां तरूणां उपरि ऊर्ध्वभागे भ्रमत् घूर्णमानं अलिकुलानां भ्रमरसमूहानां पटलं बृन्दं विलोक्य मृदुभिः ललिताभिः मदेन कलाभिः मधुराभिः केकाभिः केकाध्वनिभिः निर्भरः निबिडः नृत्ये नर्तने सक्तः आसक्तः मयूरः कलापं बर्हं मन्दमन्दं किञ्चित् किञ्चित् तरलयति चालयति । शिखी अलिपटलं दृष्ट्वा मेघभ्रान्त्या नर्तितुमुद्युक्त इति भावः । अत एव भ्रान्तिमदलङ्कारः । मालिनीवृत्तम् ॥ ४ ॥

**भ्राम्यदिति** । पुष्पशरः कामः इह (उद्दीपनविभावातिशयविशिष्टे) उद्याने स्थितस्सन् शिलीमुखेषु शरेषु यद्वा अर्शआद्यचि तद्वत्सु शरासनेषु भ्राम्यन्तः घूर्णमानाः द्विरेफाः भ्रमराः येषु तानि विकासभाञ्जि विकसितानि पुष्पाणि संयोज्य

इतश्च

हरिति हरिणयूथं यूथिकाजालमूले
कुसुमजमधुबिन्दस्यन्दसंदोहभाजि ।
मधुरमधुकरालीगीतदत्तावधानं
लिखितमिव न दूर्वापल्लवानुल्लुनाति ॥ ६ ॥

इतोऽपि

सोऽयं क्रीडाचलो भव्य लोभव्यसनवर्जित ।
यस्मिन्नासन्नसारङ्गा सारं गायति किंनरी ॥ ७ ॥
राजते राजतेनायं सानुना सानुनायकः ।
यस्मिन्निशम्य गायन्तं किंनरं किं न रंस्यते ॥ ८ ।

मेलयित्वा सर्वाणि जगन्ति जेतुं धनुःश्रमम् धनुरभ्यासं करोति । इदमुद्यानं कामोद्दीपकमिति वक्तव्ये प्रकारान्तरेण कथनात्पर्यायोक्तालङ्कारः । इन्द्रवज्रोपेन्द्रवज्रामेलनरूपोपजातिवृत्तम् ॥ ५ ॥

**हरितीति** । कुसुमजानाम् मधुबिन्दूनाम् स्यन्दसन्दोहम् निष्यन्दसमूहम् भजतीति तथोक्ते । हरिति हरितवर्णे यूथिकानाम् गणिकाख्यकुसुमानाम् जालस्य समूहस्य मूले अधःप्रदेशे यद्वा यूथिकाजालमूले (स्थिते) हरिति तृणे "हरिद्दिशि स्त्रियाम् पुंसि हयवर्णविशेषयोः । आस्त्रियां स्यात्तृणे" इति । (स्थितम्) मधुरे मधुकरालीगीते भृङ्गबृन्दगाने दत्तम् अवधानम् एकाग्रता येन तथोक्तम् अतएव लिखितमिवास्थितम् हरिणयूथं मृगबृन्दम् दूर्वापल्लवान् बालतृणानि न उल्लुनाति नच्छिनत्ति न भक्षयतीति यावत् । उत्प्रेक्षालङ्कारः । मालिनीवृत्तम् ॥ ६ ॥

**सोयमिति** । हे भव्य भद्र हे लोभेन व्यसनेन च विवर्जित अयम् सः क्रीडाशैलः यस्मिन् आसन्नाः ("पशुर्वेत्ति शिशुर्वेत्ति वेत्ति गानरसं फणी" इत्युक्तेः) गानश्रवणाय समीपगताः सारङ्गाः मृगाः यस्यास्सा किन्नरी किन्नराख्यदेवविशेषस्य स्त्री सारम् श्रेष्ठम् यथा तथा गायति । अत्र भव्य लो भव्य सारङ्गा सारङ्गा इति वीप्सया व्यवहितमव्यवहितञ्च मिश्रं यमकम् ॥७॥

**राजत इति** । अयम् सानुनायकः गिरिः रजतस्यं रूप्यस्य विकारः राजतः तेन सानुना तटेन राजते शोभते । यस्मिन् गिरौ

इतश्चास्य

जनयति ज      बाललीलामृगाणा-
मयमिह पटुकान्तिः स्फाटिको भित्तिभागः ।
इह हरितमणीनामुल्लसन्तो मयूखाः
सरसनवतृणालीलोभमुत्पादयन्ति ॥ ९ ॥

इयं च

गौरवं गौरवंशस्य पर्वतः पर्वतस्थले ।
भ्रमरी भ्रमरीणस्य कुरुतेऽकुरुतेन ते ॥ १० ॥

अपि च

इह कवलितकन्दं कंदरे कन्दलिन्यां
भुवि विरचितकेलि क्रीडति क्रोडयूथम् ।
इह सरसिजगर्भभ्रान्तभृङ्गं कुरङ्गाः
सरसि सरलयन्तः कंधरां कं धयन्ति ॥ ११ ॥

गायन्तं गानं कुर्वन्तं किन्नरं निशम्य श्रुत्वा किं वस्तु नरस्यते सर्वं रतिं गमिष्यती-त्यर्थः । अत्र पादत्रये अव्यवहितं मिश्रयमकम् ॥ ८ ॥

**जनयतीति** । इह अत्र पटुः समर्थो बहुलेति यावत् कान्तिर्यस्य सः स्फाटिकः स्फटिकमयः भित्तिभागः कुड्यप्रदेशः बालानां लीलामृगाणां क्रीडार्थं पोषितानां हरिणानां जलबुद्धिं जलभ्रमं जनयति इह हरितमणीनां गारुत्मतरत्नानां उल्लसन्तः शोभमानाः मयूखाः किरणाः (तेषामेव मृगाणां) सरसानां स्निग्धानां नवतृणानां आल्यः ततय इति लोभं भ्रान्तिं उत्पादयन्ति जनयन्ति । भ्रान्तिमदलंकारः । मालिनीवृत्तम् ॥ ९ ॥

**गौरवमिति** । गौरः शुद्धः वंशः अन्वयः यस्य तस्य । पर्वतस्य गिरेः स्थले पर्वतः गच्छतोपि भ्रमेण अटनेन भ्रान्त्याच रीणस्य प्रस्तुतस्य हीनस्येति यावत् । "रीङ् प्रस्रवणे" इति धातोः क्तः "ओदितश्च" इति नत्वं । "स्यन्नं रीणं स्रुतं स्रुते" इत्यमरः। तव । भ्रमरी भृङ्गी अकुरुतेन अकुत्सितेन शब्देन गौरवं प्रतिपत्ति-विशेषं कुरुते । अत्र पादादौ अव्यवहित मिश्रच यमकम् ॥ १० ॥

**इहेति** ॥ इह कन्दरे गुहायां कन्दलिन्यां कन्दवत्यां कदलीयुक्तायां वा भुवि कवलितकन्द भक्षितमुस्तं विरचिता कृता केलिः विहारः येन तत् क्रोयूडथं

इह पुनरनिशं निशम्य भिन्न
द्रुममुकुलानि कुलानि षट्पदानाम् ।
श्रुतिसुखकरणं रणन्ति वीणां
तदनुगुणां गुणयन्ति किंनरेन्द्राः ॥ १२ ॥

९. इतश्च क्रीडाचलस्थलकमलदीर्घिकातीरतरुतलमनुसरतु देवः ॥

यत्र च

वहति नवविकासोल्लासिकिंजल्कलुभ्यन्म-
धुकरकृतगीता नर्तयन्नब्जराजीः ।
वनकरिमदगन्धस्पर्धिसप्तच्छदाली
कुसुमजकणशारः शारदीनः समीरः" ॥ १३ ॥

वराहबृन्दं क्रीडति रमते । इह सरसि तटाके कुरङ्गाः मृगाः कन्धरां ग्रीवां सरलयन्तः सरलां ऋज्वीं कुर्वन्तस्सन्तः सरसिजानां पद्मानां गर्भे अन्तरे भ्रान्ताः चलन्तः भृङ्गाः यस्मिंस्तत् कं जलं धयन्ति पिबन्ति ॥ स्वभावोक्तिरर्थालंकारः बहवोयमकभेदाः अनुप्रासश्च शब्दालङ्काराः । मालिनीवृत्तम् ॥ ११ ॥

**इहेति** । इह पुनः अत्र तु अनिश सदा भिन्नाः (स्वभ्रमणेन) विकसिताः द्रुममुकुलाः वृक्षकोरकाः यैस्तथोक्तानि श्रुत्योः कर्णयोः सुखस्य करणं कृतिः यस्मिन् कर्मणि तद्यथा भवति तथा रणन्ति शब्दायमानानि षट्पदानां भृङ्गाणां कुलानि बृन्दानि निशम्य श्रुत्वा लक्षणया तेषां ध्वनिं श्रुत्वेत्यर्थः किन्नरेन्द्राः तस्य भ्रमरराणि तस्य अनुगुणां अनुगामिनीं समानध्वनिमिति यावत् वीणां विपञ्चीम् गुणयन्ति आवर्तयन्ति वादयन्तीति यावत् । अत्र पादमध्येषु अव्यवाहितं मिश्रञ्च यमकं ॥ पुष्पिताग्रावृत्तम् ॥१२॥

९. **इतश्चेति । क्रीडेति** । क्रीडाशैलस्थलपद्मसरस्तीरवृक्षतलम् ॥

**वहतीति** । नवेन विकासेन उल्लासिनः प्रकाशनशीलान् किञ्जल्कान् केसरान् लुभ्यद्भिः अभिलष्यद्भिः मधुकरैः कृतं गीत गानं झङ्कार इति यावत् यासु तथोक्ताः अब्जराजीः कमलश्रेणीः नर्तयन् चालयन् वनकरिणां मदगन्धेन स्पर्धनशीलानां समानगन्धानामित्यर्थः । अतएवात्रोपमालङ्कारः । सप्तच्छदवृक्षाणां आलीनां ततीनां कुसुमजकणैः मकरन्दलवैः शारः शबलः । शरदि भवानि शार-

१०. राजा तु तेन तस्याः सकलललितवनप्रदेशप्रकटनप्रियालापप्रपञ्चेन परितोषितः "साधु भोः सारसिके सुभाषितमञ्जरि, साधु । गृहाण पारितोषिकम्" इत्यभिधाय सर्वाङ्गीणाभरणप्रदानेन प्रसन्नाननां तामकरोत् ॥

११. *ततश्च संचरच्चटुलभृङ्गविहंगवेगवेल्लद्बकुलचम्पकचूतचन्दनमन्दारामन्दस्यन्दमानमकरन्दबिन्दुसंदोहाडम्बरिताकाण्डप्रावृषि, प्रलम्बताम्बूलवल्लीवलयितनितम्बकिम्बजम्बीरजम्बूस्तम्बकदम्बके, कुसुमितकरवीरवीरुधि कोरकितकरञ्जाञ्जननिकुञ्जशिञ्जानशुककपिञ्जले, जलदसमयनीरदनीलितमतमालतलताण्डविताशिखण्डिनि, मण्डलितमदकल-

दानि मुद्गादीनि तानि विद्यन्ते येषां ते शारदिनः कृषीवलाः तेषामिनः स्वामी तत्तत्सम्पत्तिहेतुत्वात्तस्य तत्स्वामित्वं समीरः वायुः वहति वाति ॥१३॥

१०. राजेति । ललितम् । रम्यम् । प्रकटनम् । प्रदर्शयितृत्वं । प्रपञ्चः । विस्तारः । सारसिके । वनपालिकायाः सारसिकेतिनाम । हे सुभाषितानां (पुष्पतुल्यानां) शोभनवचनानां मञ्जरीवमञ्जरी वल्लरी तस्यास्सम्बुद्धिः । साधु । सम्यक् । परितोषः प्रयोजनमस्य पारितोषिकं उपहारं प्रीतिदानं "प्रयोजनं" इति ठक् । सर्वाणि अङ्गानि व्याप्नुवन्तीति सर्वांगीणानि "तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति" इति खः । यान्याभरणानि तेषां प्रदानेन तां वनपालिकां सुप्रसन्नं सन्तुष्टं आनन मुख यस्यास्तथोक्तां अकरोत् ॥

११. ततश्चेति । सञ्चरता चटुलानां स्वभावतो वेगवतां भृङ्गविहगानां धूम्याटपक्षिणां यद्वा भृङ्गाणां भ्रमराणां विहंगानां शुकादीनाञ्च वेगेन वेल्लद्भयः चलद्भयः वकुलादिभ्यः अमन्द यथा तथा स्यन्दमानस्य मकरन्दस्य बिन्दुसन्दोहेन आडम्बरिता सञ्जाताडम्बरा प्रादुर्भूतेवेति यावत् । अकाण्डप्रावृट् आकस्मिकवर्षाकालः यस्मिंस्तथोक्ते । प्रलम्बाभिः लम्बमानाभिः ताम्बूलवल्लीभिः वलयिताः वेष्टिताः नितम्बा लक्षणया मध्यभागाः येषान्तथोक्तानि निम्ब किम्ब जम्बीर जम्बूवृक्षाणां स्तम्बानां गुच्छानां गुल्मानां वा "स्तम्बो गुल्मे तृणादीनामकाण्डद्रुमगुच्छयोः" इति । कदम्बकानि समूहाः यस्मिन् । कुसुमिताः करवीराणां चण्डातकानां वीरुधः लताः यस्मिन् । कोरकितेषु सञ्जातमुकुलेषु करञ्ज अञ्जन वृक्षयोः निकुञ्जेषु कुञ्जेषु शिञ्जानाः शब्दायमानाः शुकाः कपिञ्जलाश्च पक्षिविशेषाः यस्मिन् । जलदसमयनीरदवत् वर्षामेघवत् नीलतमे अतिशयेन श्यामे तमालानां तले ताण्डविताः मेघभ्रान्त्या सञ्जातनर्तनाः शिखण्डिनः मयूराः यस्मिन् । मण्डलिताः सञ्जातवृन्दाः

कलहंसोत्तंसकमलवापीमण्डिते, मञ्जरितासिन्दुवारसुन्दरामोदनान्दिनि मन्दतरमारुतान्दोलनवि लफलनालिकेरलवङ्गपूगपुंनागनारङ्गरङ्गितविहङ्गे भृङ्गमुखनखरपञ्जरजर्जरितसर्जखर्जूरमञ्जरीरजःपुञ्जपांसुलभुवि भुवोभूषणायमाने, सर्वर्तुनिवासनामनि वने विहर्तुमारभत ॥

१२. तत्र च व्यतिकरे प्रलयप्रचण्डपवनोल्लासिततनुतुहिनाचलगण्डशैललीलामाकलयन्तः, मन्दमरुत्तरङ्गिततनुतरशरदभ्रविभ्रमायमाणाः, सुरवारणेन्द्रविक्षोभितगगनमन्दाकिनीपतत्पाण्डुरडिण्डीरपिण्डपटलानि विडम्बयन्तः, शकलोदितेन्दुमण्डलसहस्रसंछादितमिव गगनमापादयन्तो, मन्दरगिरिपरिक्षेपक्षुभितक्षीरवारिधिदूरसमुच्चलितदुग्धकल्लोललीलां

मदेन कलाः अव्यक्तध्वनयः कलहंसा एव उत्तंसाः भूषणानि यासान्ताभिः कमलवापीभिः मण्डिते अलंकृते । मञ्जरितानां सञ्जातमञ्जरीकाणां सिन्दुवाराणां इन्द्रसुरभिवृक्षाणां सुन्दरामोदेन मधुरपरिमलेन नन्दयतीति तच्छीले मन्दतरेण मारुतस्य आन्दोलनेन चलनेन विलोलेभ्यः कक्कोलादिवृक्षेभ्यः रङ्गिताः चलिताः विहङ्गाः यस्मिन् । भृङ्गाणां धूम्याटानां भ्रमराणां वा मुखैरेव नखरपञ्जरैः नखनीडैः जर्जरितानां खण्डितानां सर्जखर्जूरवृक्षयोः मञ्जरीणां रजःपुञ्जेन पांसुला धूलिमती भूः यस्य । भुवः भूमेः भूषणवदाचरति सर्वर्तूनां निवासः यस्मिंस्तत् सर्वर्तुनिवासं इति नाम यस्य तथोक्ते वने (नलः) विहर्तुं रन्तु आरभत ॥

१२. तत्रेति । तत्र तादृशे व्यतिकरे सम्बन्धे च । प्रलये संवर्ते प्रचण्डेन उग्रेण पवनेन उल्लासिताः उत्पाट्य क्षेपेण प्रकाशिताः तनवः अल्पाः तुहिनाचलस्य हिमाद्रेः ये गण्डशैलाः पाषाणाः तेषां लीलां आकलयन्तः कुर्वन्तः तत्तुल्या इत्यर्थः । अत्र उपमालङ्कारः । एवमुत्तरत्रापि । मन्दमरुता तराङ्गितानां चलितानां तनुतराणां अत्यन्तस्वल्पानां शरदभ्राणां शरत्कालमेघानां विभ्रमाः विलासास्तद्वन्तइवाचरन्तः । विभ्रमायमाणेत्यत्र विभ्रमशब्दात्तद्वति वर्तमानात् उपमानात् कर्तृवाचकादाचारेर्थे क्यङ् । एवं शोभायमानेत्यादौ । सुरवारणेन्द्रेण ऐरावतेन विक्षोभितायाः लोडितायाः गगनमन्दाकिन्याः आकाशगङ्गायाः पततां पाण्डुरडिण्डीराणां श्वेतफेनानां पिण्डपटलानि सान्द्रसञ्चयान् । विडम्बयन्तः अनुकुर्वन्तः । गगनं शकलं खण्डाकारं ( खण्डशश्येव हंससदृशो भवतीति तथोक्तिः ) उदित आविर्भूत इन्दुमण्डलसहस्रं तेन संछादितं संवृतमिव आपादयन्तः तन्वन्तः । मन्दरगिरिरिव परि-

दर्शयन्तः, शेषाहिफणचक्रवालधवलाः, प्रमुदितहराट्टहासलवा इव मूर्तिमन्तः पतन्तः, अमन्दमन्द्रकोलाहलभरितभुवनान्तरालाः, सपदि धरातलमुत्फुल्लपाण्डुपङ्कजप्रकरप्रकारेण मण्डयन्तो निपेतुः कुतोऽपि पुण्डरीकपाण्डुपक्षपत्त्रराजयो राजहंसाः ॥

१३. तथाविधे च व्यतिकरे विस्मयविस्मृतानिमेषतया निर्वातनिश्चलनीलोत्पलपलाशशोभायमानलोचनः कौतुकाकूततरलितमनाः सपरिजनो नरपतिरवलोकयन्निश्चल एवावतस्थे ॥

१४. ते च धार्तराष्ट्रा अपि कृतपाण्डुपक्षपाताः, द्विजातयोऽपि सुराजिताः, केचिदुच्चचञ्चुपुटावघटितनिकटबालस्थलकमलकुड्मलाः सरं-

क्षेपः मन्थाः तेन क्षुभितस्य लोडितस्य क्षीरवारिधेः दूरं समुच्चलितानां उद्गतानां दुग्धकल्लोलानां क्षीरतरङ्गाणां लीलां दर्शयन्तः। शेषाहेः शेषाख्यसर्पस्य फणानां स्फटानां चक्रवालं मण्डलमिव धवलाः। मूर्तिमन्तः धृतशरीराः पतन्तः उत्पतन्तः प्रमुदितस्य तुष्टस्य हरस्य शिवस्य अट्टहासलवाः उद्भूतहासकणाइव स्थिताः अमन्देन मन्द्रेण गम्भीरेण कोलाहलेन कलकलेन भरितं भुवनान्तरालं येषान्तथोक्ताः। सपदि निपतनक्षणएव। धरातलं भूतलम्। उत्फुल्लानां विकसितानां पाण्डुपङ्कजानां पुण्डरीकाणां प्रकरस्य बृन्दस्य प्रकारेण सादृश्येन "प्रकारो भेदसादृश्ये" इत्यमरः। मण्डयन्तः अलङ्कुर्वन्तः पुण्डरीकवत् पाण्डवः धवलाः पक्षयोः गरुतोः पत्त्राणां पर्णानां राजयः श्रेणयः येषान्तथोक्ताः राजहंसाः हंसविशेषाः "राजहंसास्तु ते चञ्चुचरणैर्लोहितैस्सिताः" इत्यमरः। कुतोपि देशात् निपेतुः निपतन्ति स्म ॥

१३. **तथेति**। **विस्मयेति**। विस्मयेन आश्चर्येण विस्मृतः निमेषः येन तथोक्तः। **निर्वातेति**। निर्वातेन वाताभावेन निश्चलयोः नीलोत्पलस्य पलाशयोः दलयोः शोभाविशिष्टवदाचरिते लोचने यस्य तथोक्तः। **कौतुकेति**। कौतुकाकूतेन सन्तोषाभिप्रायेण तरलितं चञ्चलं मनः यस्य तथोक्तः ॥

१४. **तेचेति**॥ धार्तराष्ट्राः कृष्णचरणाननहंसाः धृतराष्ट्रपुत्राश्चापि। कृतः पाण्डूनां धवलानां पक्षाणां गरुतां पातः न्यासः पाण्डुषु (लक्षणया) पाण्डवेषु पक्षपातः तत्सहायत्वञ्च यैस्तथोक्ताः। अत्र विरोधाभासालङ्कारः।एवमुत्तरापि। द्विजातयः पक्षिणः ब्राह्मणाश्चापि सुष्ठु राजिताः शोभिताः सुरया मद्येन जिताः तदधीनाः कृताश्च। **उच्चेति**। उच्चैः उदग्रैः चञ्चुपुटैः सम्पुटतुल्यत्रोटिभिः विघटिताः विकासिताः निकटे समीपे (स्थिताः) बालस्थलकमलानां कुड्मलाः मुकुलाः यैस्तथो-

रसबिसकिसलयानि कवलयन्तः, केऽप्युन्नतसरलगलनालयो नलिनधनविमुखाः खमालोकयन्तः, केचिदुत्क्षिप्तपक्षविक्षेपपवनकम्पितकन्दलाः सलीलमुत्पतन्तः, केचिन्मदमधुरनिजानिनादानिर्जिताशिञ्जाननूपुराः, पुरःपुरोऽस्यधावन्तो विचरितुमारभन्त ॥

१५. राजापि परिधावितविहङ्गग्रहणाग्रहसमग्रव्यग्रपरिग्रहः परिहासोन्मीलदमलदन्तकान्तिस्तबकिताधरपल्लवो विहसन्नेव तेषामन्यतममनुच्चचटुलचरणचारिचर्यया चारु संचरन्तमीषदुत्क्षिप्तपक्षविलासविहसितविलासिनीलास्यलीलमुन्नमिताग्रग्रीवं जग्राह हेलया हंसम् ॥

१६. उत्क्षिप्तः स च तेन रक्तकमलगर्भविभ्रमायमाणपाणिपल्लवे, पाण्डुपद्म इव पद्मरागशुक्तितले, क्षणमुदयशैलशोणमाणिक्यशिखर-

क्ताः । **सरसेति** । स्निग्धमृणालपल्लवान् । **कवलयन्तः**। भक्षयन्तः। **उन्नतेति** । उन्नतः सरलः अवक्रः गलनालिः कण्ठकाण्डं येषान्तथोक्ताः । **नलिनं** । पद्म । **खं**।गगनम्। **उत्क्षिप्तेति** । उत्क्षिप्तयोः उद्धूतयोः पक्षयोः गरुतो विक्षेपेण प्रेरणेन (जातेन) पवनेन कम्पिताः कन्दलाः नवांकुराः येषान्ते । **सलीलं** । सविलासं । **निनादः** । शब्दः । **शिञ्जानः** । शब्दायमानः ॥

१५ **राजेति** । **परीति** । परिधावितानां विहंगानां ग्रहणे आग्रहः अभिनिवेशः तेन समग्राः सम्पन्नाः अत एव व्यग्राः व्याकुलाः परिग्रहाः परिजनाः यस्य तथोक्तः । परितः हासेन उन्मीलन् विकसन् अमलया दन्तानां कान्त्या, स्तबकितः निबिडितः अधरपल्लवः ओष्ठप्रवालः यस्य तथोक्तः । **अन्यतमं** । एकं । **उच्चेति** । उच्चायाः उन्नतायाः चटुलयोः चञ्चलयोः चरणयोः चार्याः सलयन्यासस्य चर्यया रीत्या युक्त चारु रम्य यथा तथा सञ्चरन्तं चर्यंयासञ्चरन्तमित्यन्वये "समस्तृतीयायुक्तात्" इत्यात्मनेपदेन भाव्यं । **ईषदिति** । ईषत् किञ्चित् उत्क्षिप्तयोः उद्धृतयोः पक्षयोः विलासेन लीलया विशिष्टनर्तनेन वा विहसिता परिभूता विलासिनीनां नर्तकीनां लास्यलीला नृत्यविलासः येन तं । **ग्रीवा** । कण्ठः । **हेलया** । लीलया ॥

१६. **उत्क्षिप्त इति** । तेन राज्ञा रक्तकमलगर्भस्य कोकनदमध्यस्य विभ्रमः विलासस्तद्वानिवाचरन् यः पाणिपल्लवः तस्मिन् । उत्क्षिप्तः उद्धृतः । पद्मरागशुक्तेः शोणरत्नस्फोटस्य तले पाण्डुपद्मइव पुण्डरीकमिव "वापुसिपद्मं" इति कोशात् पद्मशब्दः पुल्लिंगोपि । उदयशैलस्य शोणमाणिक्यशिखरस्य अरुणरत्नमयशृङ्गस्य

शिखायामिन्दुरिव, विराजितो राजहंसो मृदुवाद्यमानरौप्यघनघर्घरीजर्ज-रस्वरेण कृतस्वस्तिशब्दो विस्पष्टवर्णविशेषं राजानमुपश्लोकयांचकार ॥

पाण्डुपङ्कजसंलीनमधुपालीसमं गलम् ।
यो बिभर्ति विधेयात्ते ना कपाली स मङ्गलम् ॥ १४ ॥

अपिच

सरलप्रियंगुणाढ्यं लम्बितमालं विचित्रतिलकं च ।
वनमिव वपुस्तवैतत्कथमवनं नृप जनस्याभूत् ॥ १५ ॥

अपिच

वरसहकारकरञ्जकवीरतरोऽशोकमदनपुंनाग ।
विविधद्रुममय राजन्कथमासि न बिभीतकः क्वापि ॥ १६ ॥

शिखायामग्रे क्षणं (तिष्ठन्) इन्दुरिव विराजितः शोभितः सः राजहंसश्च । मृदु मन्द यथा तथा वाद्यमानस्य रौप्यस्य रजतमयस्य घनस्य तालस्य घर्घर्याः वाद्यभेदस्य जर्जरस्य अल्पकलध्वनेः दण्डिकाख्यस्य चैव स्वरेण कृतः स्वस्ति (तुभ्यं मङ्गळमस्तु ) इति शब्दः येनतथोक्तः विस्पष्टाः विशेषस्फुटाः वर्णविशेषाः अक्षर भेदायस्मिन् कर्मणितयथा भवति तथा । राजानं उपश्लोकयाञ्चकार श्लोकैरुपतुष्टाव "सत्यापपाश" इत्यदिना णिच् ॥

**पाण्डिति** ॥ यः पाण्डुपङ्कजे पुण्डरीके संलीनायाः स्थितायाः मधुपाळ्याः भृङ्गपङ्क्त्याः समं सदृशं ( अत्रोपमालङ्कारः ) गल कण्ठं बिभर्ति धारयति सः ना पुरुषशब्दवाच्यः कपाली शिवः ते मङ्गलं विधेयात् कुर्यात् । विपूर्वात् धाञः आशीर्लिङि "एर्लिङि" इत्येत्वम् । अत्र यमकविशेषश्शब्दालङ्कारः ॥ १४ ॥

**सरलेति** ॥ हे नृप वनमिव स्थूलानां अवक्राणां प्रियं गुणैश्शौर्यादिभिः आढ्यं पूर्णं पक्षे सरलः पीतद्रुवृक्षः प्रियंगुः फलिनी तयोस्समाहारः सरलप्रियङ्गु तेन आढ्यम् । लम्बिता माला पुष्पमाला यस्मिन् अन्यत्र लम्बिनः प्रलम्बनशीलाः तमालाः तापिञ्छवृक्षाः यस्मिन् । विचित्रतिलकं अद्भुतपुण्ड्रं विविधतिलकवृक्षयुक्तञ्च । एतत् तव वपुः शरीरं जनस्य कथं अवन रक्षक वनभिन्नञ्च अभूत् । अत्र विरोधाभास सभङ्गश्लेषावलङ्कारौ । आर्यावृत्तम् ॥ १५ ॥

**वरेति** । वराः श्रेष्ठाः सहकारकाः सचिवादयः यस्य तस्य संबुद्धिः वरसहकारक । रञ्जयतीति रञ्जकः तस्य सबुद्धिः रञ्जक । वीराणां गुहसहायानां नववीराणामिव तरः बलं यस्य सः वीरतराः तस्य सम्बुद्धिः वीरतरः । न शोको यस्य तस्य

१ अपिच ।

बाणकरवीरदमनकशतपत्रकबन्धुजीवकसुजाते ।
नृप विविधविटपरूपस्तथापि विटपः कथं नासि ॥ १७ ॥

१७. राजा तु तदाकर्ण्य सविस्मयम् "अहो अस्य धैर्यं मनुष्यसंनिधौ, आश्चर्यं रूपे, माधुर्यं वाचि, प्राचुर्यं प्रज्ञायाम्, औदार्यमर्थे, गाम्भीर्यं वर्णव्यक्तौ । प्रायेणाहारमैथुननिद्राभयभ्रमणमात्रविवेकासु कथं प्रागल्भ्यमेतत्पक्षिजातिषु । तदेष विहङ्गव्यञ्जनः कोऽपि कामचारी भविष्यति । सर्वथा मनसापि नावज्ञेयाः केऽपि प्राणिनः । यतः कर्मतः कामतः शापतः संछन्नरूपाण्यपि भ्रमन्ति विविधाश्चर्यभाञ्जि भूतानि" इति चिन्तयन्नुचितज्ञस्तमीषदुल्लसितासिन्दुवारमञ्जरीभिरिव कुन्दकान्तदन्तदीप्तिभिरर्चयन्स्वागतमपृच्छत् ॥

सम्बुद्धिः अशोक । मदनः कामइव मदनस्तस्य सम्बुद्धिः मदन । पुमान् नागइव पुन्नागः नरकुञ्जरः तस्य सम्बुद्धिः पुन्नाग। द्रुमपक्षे वरसहकार । श्रेष्ठचूत करञ्जक नक्तमाल वीरतरो अर्जुनवृक्ष अशोक कङ्केले मदन शल्यवृक्ष पुन्नाग केसरवृक्ष । अतएव विविधद्रुममय राजन् कथं क्वापि कुत्रापि विभीतकः विशेषेण भीतः विभीतः कुत्सितः विभीतः विभीतकः अक्षवृक्षश्च नासि न भवसि । अत्र पूर्ववद्वृत्तालङ्कारौ ॥ १६ ॥

**बाणेति** ॥ बाणः शरः करे यस्य तस्य सम्बुद्धिः बाणकर वीरान् दमयतीति वीरदमनः सएव वीरदमनकः तस्य सम्बुद्धिः वीरदमनक । शतं पत्राणि वाहनानि यस्य तस्य सम्बुद्धिः शतपत्रक । "शेषाद्विभाषा" इति कप् । बन्धून् जीवयतीति बन्धुजीवकः तस्य सम्बुद्धिः बन्धुजीवक । शोभना जातिः क्षत्रियजातिः यस्य तस्य सम्बुद्धिः सुजाते । नृप त्वं विविधाः श्लिष्टतया पूर्वोक्ताः बाणः गोस्तनः करवीरः चण्डातः दमनकं कान्ताख्यं शतपत्रकं कमलं बन्धुजीवकः बन्धूकः शोभना जातिः मालतिश्चेति विटपाः वीरुधः तद्रूपः असि तथापि कथं विटपः विटान् भुजङ्गान् पातीति विटपः विटरक्षकः वीरुच्च । नासि । पूर्ववद्वृत्तालङ्कारौ ॥ १७ ॥

१७. **राजेति** ॥ **सविस्मयम्** । साश्चर्यम् । **प्राचुर्यम्** । आधिक्यम् । **औदार्यम्** । सारल्यम् । **वर्णव्यक्तौ** । अक्षरोच्चारणे । **प्रायेण** । बाहुल्येन । **आहारेति** । आहारादिमात्रेषु विवेकः ज्ञानं यासान्तासु । प्रागल्भ्यं धाष्टर्यम् ।

१८. असावपि प्रणयप्रणतशिराः शुचिरोचिषां चयेन पाण्डुपुष्पप्रकर-प्रकारेण प्रतिपूजयन्निव "देव, भवदवलोकनेनाह्लादितमनसो ममाद्य स्वागतम्" इति ब्रुवाणो राजानं रञ्जयांचकार ॥

१९. अत्रान्तरे त्रासतरलतरतरत्तारकमकाण्डाडम्बरितबाष्पप्लवप्लवमानमिव वहन्ती चक्षुः, उत्क्षिप्तपक्षपत्रपल्लवव्याजेन संगृहीते सहचरे शाखोद्धारमिव दर्शयन्ती, हंसी दूरादवनिपालमवाप्य रौप्यमयघण्टाटंकारकोमलया गिरा श्लोकद्वयमपठत् ॥

"एकान्ते सेवते योगं मुक्ताहारपरिच्छदः ।
हंसः समोक्षयोग्योऽपि देव किं बध्यते त्वया ॥ १८ ॥

**विहङ्गव्यञ्जनः** । पक्षिरूपः। **कामचारी** । स्वेच्छाचारी विद्याधरादिः। **अवज्ञेयाः** अवज्ञातुमभिभवितुमर्हाः । **संछन्नम्** । संवृतं । **उल्लसितेति** । विकसितेन्द्रसुरभिवल्लरीभिः । **कुन्देति** । माघ्यपुष्परुचिरदन्तशोभाभिः ॥

१८. **असाविति** । **असौ** । हंसः । **प्रणयः** । स्नेहः । **शुचिरोचिषां** । शुभ्रकान्तीनां । **चयेन** । समूहेन । **पाण्डुविति** । श्वेतकुसुमनिचयभेदेन । रञ्जयाञ्चकार तोषयामास ॥

१९. **अत्रेति** । अत्रान्तरे अस्मिन्समये । त्रासेन भीत्या तरलतरं अतिशयेन चञ्चलं यथा तथा तरन्ती प्लवमाना तारका कनीनिका यस्य तत् । अकाण्डे अकस्मात् आडम्बरिते सञ्जाताडबरे अभिवृद्धे इति यावत् बाष्पप्लवे अश्रुपूरे प्लवमानं तरदिवस्थितं चक्षुः वहन्ती उत्क्षिप्तानां पक्षयोः गरुतोः पत्रपल्लवानां पलाशकिसलयानां व्याजेन मिषेण संगृहीते राज्ञा गृहीते सहचरे नायके विषये शाखोद्धारं अन्यायफूत्कारचिह्नं शाखाग्रहणं दर्शयन्तीवस्थिता हंसी हंसस्य स्त्री दूरात् अवनिपालं नलं अवाप्य रौप्यमयघण्टायाः रजतविकृतघण्टायाः टङ्कारवत् कोमलया रम्यया गिरा वाचा श्लोकयोर्द्वयं अपठत् ॥

**एकेति** । देव हे राजन् मुक्ताहारवत् मुक्तासरवत् (शुभ्रौ) परिच्छदौ पक्षौ यस्य सः यः हंसः हंसपक्षी कान्ते कस्य जलस्य अन्ते समीपे एव ए (अव्ययस्य सप्तमी) अङ्गणे अन्तःपुरे वा "अकारो ब्रह्मविष्णीशकमठेष्वङ्गणे रणे । गौरवेन्तःपुरे" इति रत्नमाला । स्थित अग वृक्ष सेवते आश्रयति मोक्षस्य मोचनस्य योग्योपि सः हंसपक्षी त्वया भवता किं किमर्थं बध्यते । अन्योऽप्यर्थः— हे देव मुक्ताहारपरिच्छदः त्यक्ताहारपरिवारः यः हंसः आत्मा जीवः कान्ते कमनीये ए विष्णौ शिवे वा । यद्वा—एकान्ते रहसि योग भक्तिं ध्यानं वा "योगः स-

नीरंजनपदेतिष्ठन्विश्वसंसारसङ्गतः ।
हंसः किं बध्यते क्वापि यस्य नालम्बनं प्रियम् ॥ १९ ॥

अन्यच्च ।

२० राजन्, जलपक्षिणो मुनय इव येमीनाहारं वाञ्छन्ति, बहुधावन-व्यसनिनः, बिसाधाराः,। तदलमाग्रहेण '' ॥

२१. राजा तु तेन तस्याः श्लेषश्लाघिना श्लोकोक्तिरसेनाह्लादितमानो-नर्मालापलीलया तां बभाषे ॥

ग्रहनोपायध्यानसङ्गतियुक्तिषु '' इत्यमरः । सेवते मोक्षस्य कैवल्यस्य योग्यः सोपि यद्वा समः लक्ष्म्यासक्तियुतः अक्षयोग्यः इन्द्रियसम्बद्धोपि सः यद्वा समः सम-दर्शनः । त्वया ( अन्यार्थकः सर्वादिगणपठितः त्वशब्द ) अन्यया पुरुषादितरया प्रकृत्या बध्यते कि न बध्यत इत्यर्थः । अत्र श्लेषालङ्कारः ॥ १८ ॥

**नीरेति** ॥ यस्य हंसपक्षिणः नलस्य ( नलाख्यस्य तव ) इदं नाल यद्वा न-लस्य कमलस्य इदं नालं '' नलः पोटगले राज्ञि पितृदेवे कपीश्वरे । कमलेपि च नट्याञ्च क्रमेण क्लीबयोषितोः '' इति मेदिनी । वनं काननं जलं वा यद्वा नालं उत्पलादिकाण्डं वनञ्च प्रियम् । सः जनानां पदे स्थाने पुरग्रामादौ अतिष्ठन् सरसः (तटाकस्य) इद सारसम् । श्वसन्तीति श्वसाः प्राणिन । वयः पक्षिणः श्वसाः यत्र तत् विश्वसं नीर जलं गतः हसः हंसपक्षी क्वापि बध्यते किं न बध्यत इत्यर्थः । अन्योप्यर्थ —यस्य हंसस्य आत्मनः विश्वसङ्गतः विश्वेषु समस्तेषु संसारसङ्गेषु सं-सारविषयेषु '' सार्वविभक्तिकस्तसिः '' आलम्बनं आसक्तिः प्रियं न । सः नीरञ्ज-नपदे नीरागस्थाने तिष्ठन् हसः आत्मा क्वापि बध्यते किम् । अत्र पूर्ववदलङ्कारः ॥१९

२०. **राजन्निति** ॥ **येमीति** । ये पक्षिणः मीनाहारं मत्स्यभोजनं वाञ्छन्ति इच्छन्ति पक्षे ये अमी मुनयः आहारं न वाञ्छन्ति । **बह्विति** । उभयेपि बहुधा अनेकधा वने जले कानने वा व्यसनिनः आसक्ताः यद्वा बहु अधिकं यथा तथा धावने द्रुतगतौ मुनिपक्षे कायादिशोधने व्यसनिनः यद्वा बहुधा अवने गमने मुनि-पक्षे अवने सकलप्राणिरक्षणे वेदान्तश्रवणे वा '' अवरक्षणगति ... श्रवणादिषु '' व्यसनिनः । **बिसेति** ॥ बिस पद्मिनीमूलं आधारः जीवनं येषान्ते बिसाधाराः प-क्षिणः । मुनयस्तु—आधारेण आश्रयेण गृहादिना सहिताः साधाराः सांसारिकाः विरुद्धाः विप्रकृष्टा वा साधारेभ्यः विसाधाराः । ( वबयोरभेदः ) **आग्रहेण** । आ-समन्तादूहणेन निग्रहेण च ॥

२१. **राजेति** ॥ **श्लेषेति** । श्लेषं नानार्थसंश्रयं सभङ्गाभङ्गभिन्नं श्लेषाख्य-मर्थचित्रं श्लाघते ( धातूनामनेकार्थत्वात् ) प्रकाशयतीति तच्छीलेन । **श्लोकेति** । श्लोकानामुक्तिरेव रसः पेयद्रव्यं तेन । **नर्मालापः** । परिहासोक्तिः ॥

"अनेकधा यः किल पक्षपातं
सदा सदम्भोजगतः करोति ।
स हंसिकेदारविहारशीलो
न बध्यते किं बहुनाशकुन्तः" ॥ २० ॥

२२. किं चान्यदपि श्रूयतां बन्धस्य कारणम् ॥

२३. अस्ति मत्परिग्रहे मृणालिकानामवननायिका, सापरागस्थगितमुखकमलापि बलादनेन विनाशिता, विनिपत्योपरि जर्जरिता नखैः, खण्डितमधरदलम्, दलितमलिकालकमण्डनम्, अपनीतः सुकुमारभावः ॥

**अनेकेति** ॥ हे हंसिके रम्ये हंसि सदा सदम्भः दाम्भिकः दम्भानुष्ठानरत इत्यर्थः । यः जगतः (विषये) अनेकधा बहुधा पक्षपातं ममतां करोति किल प्रसिद्धौ दारविहारशीलः दारक्रीडारतः ब्रह्मचर्यरहित इत्यर्थः । बहून्नाशयतीति बहुनाशः कुन्तः चण्डभावः यस्य तथाभूतः सः किं न बध्यते संसारकारायामिति शेषः । अथ वा हे हंसिके सदा सदम्भः सकपटः सपापो वा "दम्भः कल्के कैतवे च" इति हेमचन्द्रः । यः अनेकधा पक्षस्य मित्रवर्गस्य पातं नाशं करोति किल स्फुटमाचरति । जगतः दारविहारशीलः परस्त्रीरतिशीलः बहून्नाशयतीति तथोक्तः कुन्तः प्रासः यस्य तथोक्तश्च सः न बध्यते किं बध्यत एव यद्वा (वबयोरभेदात्) हन्यत एव अयं परिहासार्थः । तत्वार्थस्तु—हे हंसि बहुना बहूक्त्या किम् । सदा सदम्भोजं सत्पद्मं गतः यः अनेकधा पक्षाभ्यां गरुद्भ्यां पातं पतनं करोति किल केदारेषु सस्यक्षेत्रेषु विहरणशीलः सः शकुन्तः हंसपक्षी न बध्यते किन्तु मुच्यते । अत्र श्लेषालङ्कारः ॥ २० ॥

२२. **किञ्चेति** ॥ **बन्धस्य** । बन्धनस्य ॥

२३. **अस्तीति** ॥ मत्परिग्रहे राज्ञोपि मम कलत्राणां मध्ये मत्परिवारमध्ये वा मृणालिकेति नाम यस्यास्सा वननायिका वनस्वामिनी मृणालिकानामवननायिका । यद्वा—मृणालिकानां पद्मिनीनां अवने रक्षणे नायिका स्वामिनी (या) अस्ति सा अपरागात् (अस्मिन्) रागाभावात् स्थगितं संवृतं मुखकमलं यया तथाभूताऽपि बलात् बलात्कारात् अनेन त्वद्भर्त्रा विनाशिता शीलखण्डनं प्रापिता कथमिति चेदाह—**विनिपत्येति** । (अस्याः) उपरि विनिपत्य पतित्वा (इय अनेन स्वस्य) नखैः जर्जरिता खण्डिता (अस्याः) अधरदलं ओष्ठकिसलयं खण्डितं अलिकस्य ललाटस्य अलकानां केशानाञ्च मण्डनं भूषणं दलितं लुप्तम् । सुकुमारभावः सौकु-

२४. किं वापीवरेणानेन न कृतम् ॥

२५ तदेष यावन्मध्यं बहुधापाञ्जरन्नावगाहते तावन्मे कुतः संतोषः। नच नदीक्षितेद्विजन्मनि निगृहीतेऽपि गरीयः पातकमस्ति ॥

२६. अयि मुग्धे कलहंसिके, त्वं पुनः मानसंगतापि विमाननां सहसे, विपरीतः खल्वेषः। यतः सद्वंशकान्तारागविमुखो मधुपश्रेणिश्रयणीयां सुराजीविनीं कान्तां कामयते । तदलमनेन । गच्छ वत्से, यथाप्रियम्'' इत्यभिहितवति वसुंधरेश्वरे ॥

मार्ये कन्यात्वमिति यावत्। अपनीतः निरस्तः। तत्वार्थस्तु—मत्परिग्रहे मदधीनराज्ये मृणालिका पद्मिनी नामेति सम्बोधने अयि हंसीत्यर्थः। वननायिका वनस्वामिनीव या अस्ति परागैः मकरन्दैः स्थगितमुखानि छन्नाग्राणि कमलानि यस्यास्सा सापि बलात् अनेन विना पक्षिणा आशिता भक्षिता अधरदलं अधःपत्र अलयः भृङ्गाएव कालं कृष्णं कस्य शिरसः उपरिभागस्येति यावत्। मण्डन अलङ्करणम्। सुकुमारभावः मार्दवम्। शेषं पूर्ववत् ॥

२४. **किंवेति** ॥ पीवरेण स्थूलेन अनेन कि वा न कृतं सर्वं कृतमित्यर्थः । वास्तवे तु—वाप्यां वरेण प्रधानभूतेन ॥

२५. **तदिति** ॥ तत् तस्मात् एषः अपराधी बहुधा बहुभिः प्रकारैः पञ्जरस्य इदं पाञ्जरं मध्यं नीडमध्यं कारान्तरञ्च यावत् नावगाहते न प्रवेक्ष्यति "यावत् पुरा" इति लट्। तावत् मे कुतः सन्तोषः । अयं द्विजत्वादशिक्षणीय इत्यत आह—न चेति। दीक्षा वेदोक्तयज्ञदीक्षा शैवपाञ्चरात्राद्युक्तदीक्षा वा अस्य सञ्जातेति दीक्षितः न दीक्षितः न दीक्षितः ( नशब्दसमासः ) तस्मिन् द्विजन्मनि ब्राह्मणे क्षत्रिये वैश्ये वा निगृहीते दण्डितेपि गरीयः अतिशयेन गुरु अधिकं पातकं पाप नास्ति किञ्च दीक्षिते द्विजन्मनि निगृहीते गरीयः पातकं नास्तीति न अपित्वस्त्येवेत्यर्थोपि । वास्तवेतु—एषः त्वत्पतिः अपां मध्यं जरन् यावत् वार्धकावधि नावगाहते तावन्मे कुतस्सन्तोषः नद्यां क्षिते उषिते द्विजन्मनि पक्षिणि नितरां गृहीते स्नेहात् स्वीकृतेपि गरीयः अत्यर्थं पातकं नास्ति ॥

२६ **अयीति** ॥ **अयिमुग्धे** । हे मूढे पक्षे सुन्दरि। **मानसङ्गता**। मानेन चित्तसमुन्नत्या सङ्गता युक्तापि पक्षे मानसं सरः गतापि। **विमाननां**। अवगणनां पक्षे विषु पक्षिषु माननां पूजां। **विपरीतः**। विरुद्धवृत्तः पक्षे विभिः पक्षिभिः परीतः परिवृतश्च। **सदिति**। सति श्रेष्ठे वंशे कुले (जातायां) कान्तायां भार्यायां रागविमुखः आशारहितः पक्षे सन्तः विद्यमानाः वंशाः वेणवः येषु तेषु

२७. सापि सपरिहासं हंसी " हंहो विहंगभुजंग, मृणालिकां तामरसान्तरसानुरागरञ्जितमनाः कामयसे किं वापीनदेहे नीरसेवके त्वयि न संभाव्यते " इत्याकलितकलहं कलहंसमवादीत् ॥

२८. सोऽपि " वैदग्ध्यधुरंधर, धूर्तालापपण्डित, प्रज्ञाप्राग्भार-गुरो, चातुर्याचार्य, मा मे प्रियां प्रकोपय । सदृशा एव यूयं वयं च

कान्तारेषु वनेषु (स्थितेभ्यः) अगेभ्यः तरुभ्यः विमुखः जलचारित्वादिति भावः । **माध्विति** । मधुपगणसेव्यां पक्षे भृङ्गपङ्क्तिसेव्यां । **सुरेति** । सुरया मद्येन जीवतीति तच्छीलां । **कान्तां** । नायिकां पक्षे कान्तां रम्यां सुराजीविनीं शोभनां राजीवानि पद्मान्यस्यां सन्तीति राजीविनी पद्मिनी तां । **कामयते** । इच्छति । **तदलमिति**। तत् तस्मात् अनेन विपरीतेन अल पर्याप्तं वास्तवेतु अनेन हंसराजेन अलं तव भूषणं " अलं भूषणपर्याप्तिशक्तिवारणवाचकम् " इत्यमरः । **गच्छेति** । हे वत्से वत्सवत् अङ्गे यथाप्रियं इष्टदेशमनतिक्रम्य गच्छ धाव॰ वास्तवेतु वत्सवत् लालनीये यथा गुणैस्त्वत्समं योग्यं वा "यथा सादृश्ययोग्यत्व वीप्सास्वर्थानतिक्रमे" इति यादवः । प्रिय अमुं भर्तारं गच्छ लभस्व ॥

२७. **सेति । हंहो** । हे । **विहंगभुजङ्ग** । विहगेषु पक्षिषु भुजङ्ग सर्प-वन् द्विजिह्व मत्समक्षं अनुकूलं वदसि मत्परोक्ष प्रतिकूलं वदसीति बोधयितुं भुजंगे-त्यामन्त्रणं । **अरसां** । रागरहितां । तां राजनिवेदितां **मृणालिकां** । तन्नाम्नीं वननायिकां । **तरसा** । बलेन । **अन्विति** । अनुरागेण स्वासक्त्या रञ्जितचित्तः । **कामयसे** । इच्छसि । वास्तवेतु विहगेषु भुजङ्गविलासिन् तामरसान्तरे पद्ममध्ये सानुराग प्रीतियुक्त यद्वा तामरसानां अन्ते मध्ये स्वरूपे वा यो रसः मकरन्द. तत्रा-नुरागः यस्य तस्य सम्बुद्धिः । रञ्जितमनाः प्रीतचित्तः त्वं कां काञ्चित् मृणालिकां पद्मिनी अयसे गच्छसि । **किंवेति** । वा अथवा पीनदेहे स्थूलशरीरे नीरसे नि॰-स्नेहे वके कुटिले बवयोरभेदात् बके बकप्राये बकराक्षसतुल्ये वा "वकिकौटिल्ये" इति धातोः अच्प्रत्यये । आगमशास्त्रस्यानित्यत्वेन नुमागमाभावे बक इति रूपं । त्वयि कि नसंभाव्यते सर्वं दौर्जन्यं शंक्यत एवेत्यर्थः । वास्तवेतु वापीषु नदेषु च ईहा इच्छा यस्य तस्मिन् नीरं जलं सेवत इति नीरसेवकस्तस्मिन् त्वयि कि न संभाव्यते न प्रशस्यते सर्वं प्रशस्यत एवेत्यर्थः । **आकलितेति** । आकलितः सम्यक् कृतः पक्षे किञ्चित् कृत इव कलहः यस्मिन् कर्मणि तद्यथा भवति तथा ॥

२८. **सोपीति** । सोपि हंसोपि इति राजानमवादीत् इत्यनेनान्वयः । वैद-ग्ध्येन दाक्षिण्येन धुरन्धर राज्यभरणधुरीण । यद्वा वैदग्ध्यं औदार्यं "अग्राम्ये सर-लोदारविदग्धच्छेकदक्षिणाः" इति यादवः । तदेषामस्तीति वैदग्ध्याः "अर्श आ-

राजहंसाः । सरसां श्रियमनुभवामः । नदीनां पात्रेष्ववस्थितिं कुर्मः ।
न चरणचर्यायां न श्लाघ्यामहे । तत्सपक्षेषु विपक्षो माभूः ॥

एषा मे हृदयं जीव उच्छ्वासः प्राण एव च ।
संसारसुखसर्वस्वं प्राणिनां हि प्रियो जनः ॥ २१ ॥

रूपसंपन्नमग्राम्यं प्रेमप्रायं प्रियंवदम् ।
कुलीनमनुकूलं च कलत्रं कुत्र लभ्यते ॥ २२ ॥

यच्'' उदाराः तेषु धुरं धारयतीति धुरन्धरः धुरीणः ''संज्ञायां भृतृवृ'' इत्यादिना खच् । तस्य सम्बुद्धिः वैदग्ध्यधुरीण उदाराग्रेसर हे राजन् । धूर्तानां विटानामिव आलापे भाषणे पण्डित कोविद । प्रज्ञायाः मतेः प्राग्भारेण अतिशयेन ''प्राग्भारोतिशयोभरः'' इति यादवः । गुरो ख्यात ''गुरुर्गीष्पति पित्राद्योः पौरोहित्यकरेचना । मात्रादौ स्त्री बृहत्ख्यात दुर्भरा लघुषु त्रिषु'' इति यादवः । चातुर्येण दाक्ष्येण धीमत्त्वेन वा आचार्य आचार्यतुल्य मे मम प्रियां भार्यां हसीं मा प्रकोपय कुपितां मा कुरु । **सदृशा इति** । राजहंसाः राजमुख्याः यूयं सरसां जनानुरागकारिणीं श्रियं लक्ष्मीं अनुभवथ पात्रेषु वेदशास्त्रादिसम्पन्नसत्पुरुषेषु दीनां कृपणां अवस्थिति स्थितिं नकुरुथ रणचर्यायां युद्धकर्मणि नश्लाघ्यध्वे इति न अपि तु श्लाघ्यध्वे । वय तु राजहंसाः हंसविशेषाः सरसां तटाकानां श्रियं संपदं अनुभवामः । नदीनां सरितां पात्रेषु कूलमध्येषु '' पात्रन्तुकूलयोर्मध्येपर्णे नृपतिमन्त्रिणि । योग्यभाजनयोर्यज्ञभाण्डे नाट्यानुकर्तरि'' इति हैमः । अवस्थितिं कुर्मः । चरणाभ्यां चर्यायां गतौ नन श्लाघ्यामहे । तस्मात् यूय वयश्च सदृशाः । तत् तस्मात् सपक्षेषु समानवर्गेषु सदृशेषु सखिषु वा पत्रयुक्तेषु च । विपक्षः विरुद्धपक्षः शत्रुः माभूः ॥

**एषेति** । एषा हंस्येव मे मम हृदयं मनः विषयानुभवे प्रधाननिदानत्वात् । जीवः जीवितं तत्सद्भावे जीवनात् उच्छ्वासः श्वासरोधकचिन्तादिदुःखभरापगमहेतुत्वात् प्राणः प्रधानभूतो वायुश्च देहाधारत्वात् । उक्तमर्थमर्थान्तरन्यासेन दृढयति । **संसारेति** । प्रियः इष्टः जनः प्राणिनां संसारसुखस्य प्रापञ्चिकविषयसुखस्य सर्वं स्व स्वरूपं धनं वा । भवति हि । अत्र सामान्येन विशेषसमर्थनरूपार्थान्तरन्यासालङ्कारः ॥ २१ ॥

**रूपेति** । रूपेण सौन्दर्येण सम्पन्नं पूर्णं अग्राम्यं सरलं प्रेमप्रायं प्रीतिबहुलम् । प्रियं इष्टं वदतीति प्रियंवदम् । कुले भवं कुलीनं सत्कुलजात । अनुकूलं अप्रतिकूलञ्च कलत्रं दाराः कुत्र लभ्यते । अत्रानुप्रासालङ्कारः ॥ २२ ॥

२९. तदलमलीककलहारम्भेण भवानप्येवं प्रेमप्रपञ्चनाटकनायको नातिचिरादेव यथा भवति तथा कमप्युपकारं करिष्यामि'' इति राजानमवादीत् ॥

३०. अत्रान्तरेऽन्तरिक्षमण्डलादतिस्पष्टवर्णव्यक्तिमनोहारिणी वागश्रूयत ॥

"राजन्राजीवपत्राक्ष क्षिप्रं हंसो विमुच्यताम् ।
भविष्यत्येष ते दूतो दमयन्त्याः प्रलोभने'' ॥ २३ ॥

३१. राजा तु तस्याः सोष्मबलातैलपूरेणेवाङ्गमुत्पुलकयता, कर्णान्तरमवतीर्णेन, दमयन्तीति नाम्ना कोमलतैत्तिरपिच्छस्पर्शसुखमिवानुभवन्मनाङ्निमीलिताक्षश्चिन्तयांचकार ॥

"आह्लादयन्ति सौख्याम्भः शातकुम्भीयकुम्भिकाः ।
काञ्चीकलापसश्रीकाः श्रोणीबिम्बाः श्रुता अपि ॥ २४ ॥

२९. **तदिति** । **अलीककलहः** । अनृतविरोधः । "अलीकन्त्वप्रियेनृतं'' इत्यमरः । **प्रेमेति** । प्रेम्णः स्नेहस्य नर्मणोवा कलत्रविषयकप्रीतेरित्यर्थः प्रपञ्चः विस्तार एव नाटकं रूपकभेदः तस्य नायकः नयति प्राप्नोति वृत्तं फलञ्चेति नायकः प्रबन्धव्यापीफलाश्रय इत्यर्थः । **नातिचिरादेव** । शीघ्रमेव । **यथाभवति** । "वर्तमानसामीप्ये वर्तमानवद्वा'' इति भविष्यदर्थे लट् । यथा भविष्यतीत्यर्थः ॥

३०. **अत्रेति** । **अन्तरिक्षमण्डलात्** । अकाशदेशात् । **वर्णव्यक्तिः** ॥ वर्णानामक्षराणां व्यक्तिः पृथगात्मता असंश्लिष्टत्वामिति यावत् ॥

**राजन्निति** । **राजीवपत्राक्ष** । राजीवस्य पद्मस्य पत्रे इवाक्षिणी यस्य तस्य संबुद्धिः "बहुव्रीहौ सक्थ्यक्ष्णोः'' इत्यादिना षच् । **क्षिप्रम्** । शीघ्रम् । **प्रलोभने** । आशोत्पादने ॥ २३ ॥

३१. **राजेति** । राजातु । **तस्याः** । आकाशवाण्याः सकाशात् कर्णान्तरं श्रोत्रमध्यं **अवतीर्णेन** । प्रविष्टेन । **सोष्मेति** । सोष्म उष्णं बलायाः वाट्यालकस्य ( चित्तामुट्टीति द्राविड्यां ) तैलस्य पूरेण प्रवाहेणेव अङ्गं उत्पुलकयता अधिकं रोमाञ्चयता, दमयन्तीति नाम्ना कोमलानि मृदुलानि तित्तिरीणां तदाख्यपक्षिणामिमानि तैत्तिराणि यानि पिञ्छानि बर्हाणि तेषां स्पर्शसुखं अनुभवन्निव मनाक् किंचित् निमीलिताक्षः पिहितनेत्रस्सन् चिन्तयाञ्चकार ॥

**आह्लादयन्तीति** ॥ सौख्यमेवाम्भः जलं तस्य तत्प्रदाः तद्युक्ता वा शातकुम्भे पर्वते भवं शातकुम्भं स्वर्णं तस्य इमाः शातकुम्भीयाः स्वर्णमय्यः कुम्भि-

३२. तत्केयं दमयन्ती, कश्चायमाश्चर्यभूतो विहंगः, का चेयं नभोभारती, सर्वमेतद्विस्तरेण वेदितव्यम्" इत्यवधारयन्नेकस्यामुत्फुल्लपल्लवितलतामण्डपच्छायायामुन्निद्रकुसुममकरन्दशीकरासाराशिशिरे शिलातले निषद्य तं हंसमवादीत् ॥

३३. भद्र, साप्तपदीनं सख्यम्, उत्पन्नकतिपयप्रियालापा प्रीतिः, प्रयोजननिरपेक्षं दाक्षिण्यम्, अकारणप्रगुणं वात्सल्यम्, अनिमित्तसुन्दरो मैत्रीभावः, सतां लक्षणम् ॥

३४. अस्ति च तत्सर्वं भवन्मूर्तावतो निःशङ्कमभिधीयसे । कथय केयं दमयन्ती, कस्य सुता, कीदृग्रूपम्, कुत्र सा वसति, कश्च भवानस्माकमुपकर्तुमिच्छति, का चेयं दिव्यवाणी" इत्येवमुक्तः स कथयितुमारेभे ॥

काः घटयः सौख्यजलस्वर्णकलश्य इत्यर्थः । काञ्चीकलापेन मेखलाभूषणेन सश्रीकाः शोभायुक्ताः । श्रोणीबिम्बाः कटिप्रदेशाः श्रुता अपि ( किमुत दृष्टाः स्पृष्टा वा ) आह्लादयन्ति । अत्र रूपकालङ्कारः । कैमुत्यध्वनिश्च ॥ २४ ॥

३२. **तदिति** ॥ **नभोभारती** । आकाशवाणी । **वेदितव्यम्** । ज्ञातव्यम् । **अवधारयन्** । निश्चिन्वन् । **उत्फुल्ला** । विकसिता । **पल्लविता** । सञ्जातकिसलया । **उन्निद्रेति** । विकसितपुष्परसकणधारासम्पातशीतले । **निषद्य** । उपविश्य॥

३३. **भद्रेति** ॥ भद्र श्रेष्ठ यद्वा साधो सप्तभिः पदैः ( उक्तिभिः पादनिक्षेपैर्वा ) अवाप्यते इति साप्तपदीनम् । "साप्तपदीनं सख्यम्" इति साधु । सख्युर्भावः कर्म वा सख्यं कतिपयेभ्यः प्रियालापेभ्यः प्रियभाषणेभ्यः उत्पन्ना उत्पन्नकतिपयप्रियालापा "वाहिताग्न्यादिषु" इत्यनेन परनिपातः । प्रीतिः प्रीणनम् । प्रयोजनं प्रतिप्रयोजनं निरपेक्षते नापेक्षत इति प्रयोजननिरपेक्षं दाक्षिण्य सारल्यं छन्दानुवर्तित्वं वा । अकारणे कारणाभावेपि प्रगुणं अकुटिलं "ऋजावजिह्म प्रगुणौ" इत्यमरः । वात्सल्यं वत्से पुत्रादिस्नेहपात्रे अभिलापोस्यास्तीति वत्सलः "वत्सांसाभ्यां कामबले" इति लच् । तस्य भावः वात्सल्यम् । यद्वा वत्समिव लाति गृह्णातीति वत्सलस्तस्य भावः वात्सल्यं । अनिमित्तः अकृत्रिमः अतएव सुन्दरः रम्यः । मित्रस्य सुहृदः कर्म मैत्री तस्यां भावः अभिप्रायः यद्वा मैत्र्या भावः स्थितिः इति यत् एतत् सतां लक्षणम् ॥

३४. **अस्तीति** ॥ **भवन्मूर्तौ** । भवतः तव मूर्तौ शरीरे । **निःशंकम्** । निःसन्देहम् । **अभिधीयसे** । उच्यसे । **उपकर्तुम्** । उपकारं कर्तुम् । **दिव्यवाणी** । दिवि आकाशे भवा दिव्या वाणी वाक् ॥

"शृङ्गाररसभृङ्गार तस्याः सौन्दर्यवीरुधः ।
कर्णमारोप्यतां देव वार्ताविस्मयपल्लवः ॥ २५ ॥

३५. अस्ति विस्तीर्णमेदिनीमण्डलमण्डनायमानो नगनगरपुरविहारारामरमणीयः सीतासहायसंचरितरघुपतिपादपद्मपवित्रारण्यः पुण्यतरतरङ्गगङ्गागोदावरीवारिवारितदुरितदावानलप्रसरः, मन्दर इव वलिराजजनितपरिवर्तनः, कैलास इव महेश्वरलोककृतवसतिः, मेरुरिव सुवर्णप्रकृतिकमनीयो, यदुवंश इव दृष्टशूरपुरुषावतारः, सोमान्वय इव बुधप्र-

**शृङ्गारेति** ॥ शृङ्गं प्राधान्यमियर्तीति शृङ्गारः तदाख्यो रसः । शृङ्गारलक्षणन्तु – "रतिस्थायिभावकः कान्ताद्यालम्बनकः स्रक्चन्दनाद्युद्दीपितः कटाक्षाद्यनुभावितः व्रीडादिसञ्चारितः शृङ्गारः" इति । स एव रसः जलं तस्य बिभर्ति जलमिति भृङ्गारः कनकालुका जलभरितस्वर्णपात्रं तस्य सम्बुद्धिः हे देव राजन् । तस्याः दमयन्त्याएव सौन्दर्ययुक्तायाः वीरुधः लतायाः यद्वा सौन्दर्येण विरुध इव स्थितायाः तस्याः दमयन्त्याः वार्तायाः वृत्तान्तस्य विस्मयः आश्चर्यमेव पल्लवः किसलयः यद्वा वार्ताविस्मयः पल्लवइव । कर्णे आरोप्यताम् । सुन्दरलतापल्लवस्य शृङ्गारिणा कर्णपूरीकरणमिव दमयन्तीसौन्दर्यवार्ता रसिकशिरोमणिना राज्ञा त्वया श्रूयतामित्यर्थः । अत्र रूपकालङ्कारः ॥ २५ ॥

३५. **अस्तीति । मेदिनी** । भूमिः । **नगेति** । नगाः पर्वताः । नगा वृक्षास्सन्त्यत्रेति नगरं वृक्षादियुक्तं शाखानगरं । पिपर्ति पालयतीति पुरं पालनसाधनदुर्गादिविशिष्टा प्रधानराजधानी । विहारारामाः क्रीडोद्यानानि यद्वा विहाराः क्रीडास्थानानि आरामाश्च तैः रमणीयः । **सीतेति** । सीतासहायस्य जानकीसखस्य सञ्चरितस्य पीतागाव इत्यादिवत् अर्शआद्यचि सञ्चरितवतः रघुपतेः पादपद्माभ्यां पवित्राण्यरण्यानि यस्य सः । **पुण्येति** ॥ पुण्यतरतरङ्गायाः गङ्गागोदावर्योः वृद्धगंगाभिधगोतम्याः यद्वा गङ्गायाः गोदावर्याश्च वारिणा वारितः दुरितमेव पापमेव दावानलः तस्य प्रसरः व्याप्तिर्यस्मिन् तथोक्तः मन्दरः मन्थानत्वेन क्षीराब्धौ पातितः मन्दरपर्वत इव । बलिना बलवता महाबलिसंज्ञकेन राज्ञा भीमेन दैत्यराजेन च जनितं परिवर्तनं परिपालनं भ्रमणञ्च यस्य सः । कैलासगिरिरिव महेश्वरलोकैः धनिकजनैः शिवभक्तैश्च कृता वसतिर्वासः यस्मिन् सः । मेरुगिरिरिव सुष्ठु वर्णैः विप्राद्यैः प्रकृतिभिः अमात्यादिश्च पक्षे सुवर्णप्रकृत्या स्वर्णस्वभावेन कमनीयः रम्यः । यदुवंशः ययातेः ज्येष्ठपुत्रस्य यदोः कुलमिव । दृष्टः शूरपुरुषाणां शौर्यवतां नराणां पक्षे शूरः शूराख्यः वसुदेवपिता स एव पुरुषः तस्य अवतारः उत्पत्तिः यस्मिन् सः सोमस्य चन्द्रस्य अन्वयः वंश इव । बुधप्रधानः । विद्वत्प्रधानः चन्द्रपुत्रप्रधानश्च । वेद-

धानः, वेदपाठ इवानेकैः सवनैरुपेतः, पर्वते पर्वते स्थाणुभिः, पुरे पुरे पुराणपुरुषैः, जले जले कमलोद्भवैः, पदे पदे देवकुलैः, वने वने वरुणैः, स्थाने स्थाने नन्दनोद्यानैः, अर्गलः स्वर्गस्य, तापीप्रायोऽप्यनुपतापी जनस्य, विन्ध्याद्रिमुद्रितायां दिशि देशानामुत्तरोऽपि दक्षिणो देशः ॥

३६. यत्र । शास्त्रे शस्त्रे च वेदे वैद्ये च भरते भारते च कल्पे शिल्पे च प्रधानो, धनी, धन्यो, धान्यवान्, विदग्धो वाचि, मुग्धो मुखे, स्निग्धो मनसि, वसति निरन्तरमशोको लोकः ॥

३७. यत्र क्रुद्धधूर्जटिललाटलोचनानलज्वालाकबलनाकुलः, त्रासादपाङ्गावलोकनमात्रनिर्जितपरमेश्वरमनसां विलासिनीनामुच्चकुचकुम्भ-

पाठः । वेदाध्याय इव । अनेकैः स इति भिन्नं पदं वनैः उपेतः सः प्रसिद्धः पक्षे सवनैर्यज्ञैः युक्तः । **स्थाणुभिः** । शाखापत्रहीनतरुभिः रुद्रैश्च । **पुराणपुरुषैः** । वृद्धैः विष्णुभिश्च । **कमलोद्भवैः** । पद्मानामुत्पत्तिभिः ब्रह्मभिश्च । **देवकुलैः** । देवगृहैः पक्षे देवबृन्दैः यद्वा देवराष्ट्रैः "कुलं जनपदे गोत्रे सजातीयगणेपि च । भवने च तनौ क्लीबं कण्टकार्योषधौ कुली" इति मेदिनी । **वरुणैः** । वरणवृक्षः पक्षे पाशिभिः सूर्यैर्वा । **नन्दनोद्यानैः** । आनन्दकैरुपवनैः पक्ष नन्दनं इन्द्रवनं तत्संज्ञकोपवनैः । (तैस्तैर्बहुत्वविशिष्टैः) **स्वर्गस्य** । दिवः । **अर्गलः** । विष्कंभः निरोधकः अवमन्तेति यावत् । स्वर्गेह्येकैकः स्थाणुप्रभृतिः अत्र तु बहव इति तस्मादधिकोयन्देश इति भावः । **तापीति** । प्रायः प्रायेण तापी अवश्यन्तापयतीति तापी तादृशोपि जनस्य अनुपतापी असन्तापयिता इति विरोधे तापी तदाख्यनदी प्रायेण यत्र सः तापीप्रायइति परिहारः । **मुद्रितायां** । चिह्नितायां । उत्तरः उत्तरदेशसम्बन्ध्यपि दक्षिणः दक्षिणदेशसम्बन्धीति विरोधे उत्तरः श्रेष्ठ इति परिहारः ॥

३६. **यत्रेति** । **भरते** । गान्धर्वे । **कल्पे** । यज्ञकर्मणामुपदेशके कल्पसूत्रे । **शिल्पे** । कलादिकर्मणि च । **प्रधानः** । प्रमुखः "वा क्ली प्रधानं प्रमुखप्रबर्हप्रवरोत्तमाः" इति यादवः । **धन्यः** । पुण्यवान् । **विदग्धः** । चतुरः । **मुग्धः** । सुन्दरः । **स्निग्धः** । स्नेहवान् । **निरन्तरं** । सदा ।

३७. **यत्रेति** । यत्र देशे क्रुद्धस्यधूर्जटेः शिवस्य ललाटलोचनानलज्वालया कबलनेन भक्षणेन आकुलः व्याकुलः मकरकेतनः कामः अपाङ्गावलोकनमात्रेण कटाक्षवीक्षणमात्रेण निर्जितानि परमेश्वराणां धनिनां परमेश्वरस्य शिवस्य च मनांसि यासान्तासां । कामजिदपि ताभिर्जित इत्युक्तिलेशः । विलासिनीनां विलासवतीनां स्त्रीणां उच्चयोः उन्नतयोः कुचकुम्भयोः श्रृङ्गारस्य सर्वं स्वं स्वरूपं । अधरपल्लवेषु

योः शृङ्गारसर्वस्वम्, अधरपल्लवेषु मधु, भ्रूभङ्गेषु धनुः, कटाक्षेषु पुष्पबाणान्निधाय निलीनोऽङ्गेषु जघनस्थलस्थापितरतिर्मकरकेतनः ॥

३८. यासां तारुण्यमेव सर्वाङ्गेषु शोभार्थमाभरणम्, उत्तुङ्गस्तनमण्डललावण्यमेव मुखकमलावलोकनाय दर्पणः, तारतरनयनकान्तिरेव मुखमण्डलमण्डनाय चन्दनललाटिका, भ्रूभङ्गा एव विभ्रमाय मृगमदपत्रभङ्गाः, कटाक्षा एव युवजनजयाय परमास्त्राणि, बन्धूककुसुमकान्तिदन्तच्छद एव लोकलोचनमनोमोहनाय माहेन्द्रमणिः, मुखकमलपरिमलागतमधुकरमधुरझंकार एव विनोदाय वीणाध्वनिः ॥

किं बहुना ।

ता एव निर्वृतिस्थानमहं मन्ये मृगेक्षणाः
मुक्तानामास्पदं येन तासामेव स्तनान्तरम् ॥ २३ ॥

ओष्ठकिसलयेषु मधु भ्रूभङ्गेषु भ्रुकुटिषु यद्वा भ्रुवोर्विच्छित्तिषु धनुः कटाक्षेषु अपांगेषु पुष्पाण्येव बाणान् निधाय स्थापयित्वा जघनस्थले कटिप्रदेशे पृष्ठदेशे च स्थापिता रतिः सुरतं स्वभार्या च येन तथोक्तस्सन् अङ्गेषु तासामवयवेषु निलीनः तिरोहित इति मन्ये अन्यथा कथन्तासां परमेश्वरमोहकरूपादिसम्पत्तिः । अत्रगम्योत्प्रेक्षालकारः ॥

३८. **यासामिति** ॥ **यासाम्** । स्त्रीणाम् । **तारुण्यम्** । यौवनमेव **लावण्यम्** । कान्तिविशेषः । **दर्पणः** । आदर्शः । **तारतरा** । अत्युच्चा अतिश्रेष्ठेति यावत् । **चन्दनेति** । ललाटस्यालङ्कारः ललाटिका "कर्णललाटात् कनलङ्कारे" इति कन् । चन्दनरचित ललाटालङ्कारः । **भ्रूभङ्गाः** । भ्रुवोः भङ्गाः कौटिल्यानि विच्छित्तिविशेषा वा । **विभ्रमाय** । विलासाय । **मृगेति** । कस्तूरीरचित मकरिकादिपत्ररचनाः । **बन्धूकेति** । बन्धुजीवपुष्पशोभासमानशोभायुक्तोऽधरः । **माहेन्द्रमणिः** । महेन्द्रेण प्रोक्तं महेन्द्रादागतं वा माहेन्द्रं इन्द्रजाल तन्त्रबलेनाविद्यमानवस्तुप्रकाशनमिति यावत् । तदर्थो मणिः । माहेन्द्रमणिः । **परिमलः** । वासना । **विनोदाय** । कौतुकाय । अत्र तारुण्यादीन्येवाभरणादीनि शोभाद्यर्थानि नाभरणादीनि शोभाद्यर्थानीति वर्जनीयस्य आर्थत्वात् आर्थवर्जनीया परिसङ्ख्या रूपकमिलिता । परिसङ्ख्यालक्षणन्तु—"परिसङ्ख्या निषिध्यैकमेकस्मिन्वस्तुयन्त्रणम्" इति ॥

**ता इति** ॥ ताः मृगस्य हरिणस्येव ईक्षणे नेत्रे यासान्ता एव निर्वृतेः मुक्तेस्सुखस्य च स्थान आस्पदमिति अहं मन्ये । येन कारणेन तासां स्तनान्तरं

३९. मन्ये च । ताभिरेव विविधनिधुवननिधानकुम्भीभिः कुम्भोद्भवोऽपि भगवान्प्रलोभितो भविष्यति, येनाद्यापि न मुञ्चति दक्षिणां दिशमेव ॥

अथवा ।

देशो भवेत्कस्य न वल्लभोऽसौ
स्त्रीसंकुलः सुस्थितकामकोटिः ।
दग्धैककामं त्रिदिवं विहाय
यस्मिन्कुमारोऽपि रतिं चकार ॥ २७ ॥

४०. तस्यान्तर्भूतवैदर्भमण्डलस्यालंकारभूतमनाकुलममरपतिपुरप्रतिस्पर्धि परितःपरिखाप्रान्तरूढप्रौढहृद्योद्यानमालावलयितमदभ्रशुभ्राभ्रंलिहप्रासादशिखरशिखाभोगभग्नरविरथतुरंगवेगम् । एकत्राग्निहोत्रम--

कुचमध्यमेव मुक्तानां मुक्तात्मनां मौक्तिकानाञ्च । आस्पदं स्थानम् । अत्र उपमाश्लेषोत्प्रेक्षाणां मेलनम् ॥ २६ ॥

३९. **मन्ये चेति** ॥ **ताभिः** । दक्षिणदेशनारीभिः । **विविधेति** । विविधानां निधुवनानां सुरतानामेव निधानानां निधीनां कुम्भीभिः घटीभिः "गौरादित्वात् ङीष्" **कुम्भोद्भवः** । अगस्त्यः । **प्रलोभितः** । वञ्चितः मोहित इत्यर्थः ॥

**देश इति** ॥ स्त्रीभिः सङ्कुलः निबिडः । सुखेन स्थिता कामकोटिः कामाक्षी देवी मन्मथकोटिश्च यस्मिंस्तथोक्तः । असौ देशः दक्षिणदेशः कस्य वल्लभः प्रियः न भवेत् । यस्मिन्देशे दग्धः एकोऽपि कामः यस्मिंस्तथाभूतम् । त्रयः ब्रह्मविष्णुरुद्राः दिव्यन्त्यास्मिन्निति त्रिदिवः स्वर्गः तम् । विहाय त्यक्त्वा कुमारोऽपि कार्तिकेयो बालश्चापि रतिं आसक्तिं सुरतञ्च चकार । अत्र विरोधाभासश्लेषकाव्यलिङ्गान्यलङ्काराः । स्वर्गतुल्योयमिति उपमा ध्वन्यते । तया व्यतिरेकध्वनिः । इन्द्रवज्रावृत्तम् ॥ २७ ॥

४०. **तस्येति** ॥ तस्य दक्षिणदेशस्य अन्तर्मध्ये स्थितं वर्तमानं यत् विदर्भाणामिदं वैदर्भं मण्डलं विदर्भदेशस्तस्य । अलङ्कारभूतम् । अनाकुलं निरुपद्रवम् । अमरपतिपुरं प्रतिस्पर्धते अभिभवितुमिच्छतीति तच्छीलम् । परितः समन्ततः परितः खन्यत इति परिखा खेयं तस्याः प्रान्ते पर्यन्ते रूढानां उत्पन्नानां प्रौढानां तरुणानां हृद्योद्यानानां रम्योपवनानां मालया पङ्क्त्या वलयितं वेष्टितम् । अदभ्राः अनल्पाः शुभ्राः सुधाधवलाः अभ्रं लिहन्तीति अभ्रंलिहाः आकाशव्यापिनश्च

न्त्रपवित्राहुतिहतसमस्तदिव्यान्तरिक्षभौमोत्पातसंघातैः, कृतमन्युभिरपि मन्युशून्यैः, उक्तसूक्तैरपि निरुक्तपरैः, सन्मार्गस्थैरपि गृहस्थैः, सकलत्रैरपि ब्रह्मचारिभिः, अभ्यस्तातिथिभिरप्यतिथिकुशलैः, सामप्रयोगप्रधानैरपि दण्डावलम्बिभिः, शतपथानुसारिभिरप्येकमार्गैः, ब्राह्मणैरध्यासितम्। एकत्र कुरुभिरिव द्रोणपुरःसरैः, प्रासादैरिव तुलाधारिभिः।

"वहाभ्रे लिहः" इति खश्। ये प्रासादाः धनिकगृहाणि तेषां शिखरशिखानां शृङ्गाग्राणां आभोगेन आयामेन भग्नः रविरथतुरङ्गाणां वेगः यस्मिंस्तत् अत्र सम्बन्धातिशयोक्तिः। एकत्र क्वचित्। अग्निषु गार्हपत्याहवनीयदक्षिणाग्निषु होत्र क्षीरहोमः यस्मिन् तत् अग्निहोत्र तदाख्य सायंप्रातरनुष्ठेय कर्म तत्र ये मन्त्राः "अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा" इत्यादयः तैः पुनन्तीति पवित्राः पूताः याः आहुतयः होमाः ताभिः हतः निरस्तः दिव्यानां दिवि स्वर्गे भवानां आन्तरिक्षाणां अन्तरिक्षे आकाशे भवानां भौमानां भूमौ भवानाञ्च उत्पातानां उपद्रवाणां सङ्घातः सङ्घः यैस्तथाभूतैः। कृतमन्युभिः पूर्णकोपैरपि मन्युशून्यैः कोपरहितैरिति विरोधः रचितयागैरिति परिहारः। "कृतं युगेलमर्थे स्याद्विहिते हिंसिते त्रिषु" इति मेदिनी। "मन्युर्दैन्ये क्रतौ क्रुधि" इति हैमः। उक्त कथित शोभन उक्तं वचनं पुरुषसूक्तादिकञ्च यैस्तैरपि। निरुक्ते वचनाभावे निरुक्ताख्यवेदाङ्गान्यतमे च परैः आसक्तैः। सतां नक्षत्राणां "सन्नक्षत्रमुडर्नना" इति वैजयन्ती। साधूनाञ्च मार्गे तिष्ठन्तीति सन्मार्गस्थास्तैरपि गृहे भवने गृहेण भार्यया च तिष्ठन्तीति गृहस्थास्तैः। सकलत्रैः भार्यायुक्तैः सकल समस्तं त्रायन्ते रक्षन्ति इति सकलत्रास्तैरपि। ब्रह्मचारिभिः प्रथमाश्रमिभिः ब्रह्म तपः ज्ञानं वा चरन्त्यवश्यमिति ब्रह्मचारिणस्तैश्च। अभ्यस्ताः आवर्तिताः तिथयः प्रथमादयः यैस्तथोक्तैरपि अतिथिकुशलैः तिथिषु अनिपुणैः अतिथीनागन्तुकान् कुशांश्च लान्ति गृह्णन्तीति तथोक्तास्तैः। **सामेति**। सान्त्वनोपायमुख्यैरपि सामवेदीयोद्गातप्रयोगसमर्थैश्च। दण्डं दण्डनोपाय वेणुदण्डञ्च "धारयेद्वैणवं दण्डं शुभे रौक्मे च कुण्डले। यज्ञोपवीत वेदञ्च सोदकञ्च कमण्डलुम्" इति स्नातकविधेरिति भावः। अवलम्बन्ते धारयन्तीति तच्छीलैः। शतपथं शतसङ्ख्यं पन्थानं शतपथाख्यशुक्लयजुर्वेदीयब्राह्मणञ्च अनुसरन्तीति तच्छीलास्तैरपि। एकः एकसङ्ख्यः मुख्यश्च मार्गः येषान्तैः। ब्राह्मणैः ब्रह्म वेद अधीयते विदन्ति वा ब्राह्मणास्तैः। अध्यासितं अधिष्ठितम्। एकत्र क्वचित् कुरुभिः दुर्योधनादिभिरिव द्रोणः मानविशेषः द्रोणाचार्यश्च पुरस्सरः येषान्तैः। "पलं प्रकुञ्चक मुष्टिः कुडवस्तच्चतुष्टयम्। चत्वारः कुडवाः प्रस्थश्चतुःप्रस्थमथाढकम्॥ अष्टाढको भवेद्द्रोणः

नैयायिकैरिवानुमेयानुमाननिपुणैः, वैशेषिकैरिव द्रव्यानुगुणकर्मविशेषपण्डितैः, वैयाकरणैरिव रूपसिद्धिप्रधानैः, रुद्रैरिवानेकग्रन्थिबद्धकपर्दकैः, विपणिवणिग्जनैरधिष्ठितम्। एकत्र विटकौलदम्भदीक्षाभिरिव कुचरूपलोभितलोकाभिः, कुकविकाव्यपद्धतिभिरिव भग्नयतिगणवृत्ताभिः, निशाचरीभिरिव रजनीरागिणीभिः, सर्वतोमुखजघनचपलाभिरप्यनार्याभिः,

द्विद्रोणः शूर्पउच्यते । सार्धशूर्पो भवेत्खारी द्विद्रोणागोण्युदाहृता ॥ तामेवभारं जानीयाद्वाहोभारचतुष्टयम्'' इति । प्रासादैः राजगृहैरिव तुलां सूत्रादिमानं गृहादीनां तिर्यग्धारणस्तम्भञ्च धारयन्तीति तच्छीलास्तैः । न्यायं गौतमीयशास्त्रं विदन्तीति नैयायिकास्तैरिव अनुमेय अनु द्रव्यादानात्पश्चात् मातुं मानेन निर्धारयितु योग्य मेयं क्रय्यं कणादिवस्तु तस्य अनुमान उद्देशज्ञानं यद्वा अनुक्रमेण मेयस्य मातुं योग्यस्य वस्तुनः अनु ज्ञानपूर्वकं मान तोलन तत्र निपुणैः । पक्षे अनुमीयत इत्यनुमेयं साध्यं वह्नयादिक अनुमीयतेनेनेत्यनुमानं हेतुर्धूमादिः तयोर्निपुणैः । वैशेषिकैः काणादैरिव । द्रव्यस्य रूप्यादेः अनुगुणः सङ्कलना तस्य कर्मणः क्रियायाः विशेषे भेदे यद्वा द्रव्यानुगुणेषु वित्तानुसारिषु कर्मविशेषेषु क्रय्यवस्तुसङ्ग्रहणादिक्रियातिशयेषु पण्डितैः । पक्षे द्रव्यं द्रव्यपदार्थं अनुगताः समवायसम्बन्धेन आश्रिताः ( गुणगुणिनोः क्रियाक्रियावतोः विशेषनित्यद्रव्ययोश्च समवायादिति शास्त्रात् ) ये गुणकर्मविशेषाः पदार्थाः तेषु पण्डितैः । व्याकरणं विदन्तीति वैयाकरणाः शाब्दिकास्तैरिव । रूपाणां टङ्ककरूपकादिनाणकानां शब्दानाञ्च सिद्धिः वृद्धिः निष्पत्तिश्च प्रधान येषान्तैः । " रूपन्तुश्लोकशब्दयोः । पशावाकाशे सौन्दर्ये नाणके नाटकादिके । ग्रन्थावृत्तौ स्वभावे च'' इति हैमः । "सिद्धिः स्त्रीयोगनिष्पत्तिपादुकान्तर्धिवृद्धिषु'' इति मेदिनी । रुद्रैः एकादशरुद्रैरिव अनेकेषु ग्रन्थिषु बन्धेषु पर्वसुवा बद्धः कपर्दः ( नाणकत्वेनकाचिद्देशे प्रख्यातः) वराटः जटाजूटश्च येषान्तैः । विपणौ पण्यवीथिकायां ( प्रधानैः ) वणिग्जनैः वाणिज्यजीविभिः अधिष्ठितं अध्यासित । एकत्र विटाः भुजङ्गाः ये कौलाः शाक्ताः तेषां दम्भप्रधानाभिः दिक्षाभिः नियमैरिव कुचयोः रूपेण लोभिताः मोहिताः अन्यत्र कुत्सितेन चरुणा मांसौदनादिना उपलोभिताः प्रतारिताः लोकाः याभिस्ताभिः । कुकवेः काव्यस्य पद्धतिभिः सरणिभिरिव-भग्नं यतिगणानां मुनिबृन्दानां वृत्तं शीलं याभिः अन्यत्र भग्नाः यतिः पदविरामः गणाः मगणादयोष्टौ च येषु तानि भग्नयतिगणानि वृत्तानि पद्यानि यासु ताभिः । **निशाचरीभिः** । राक्षसीभिरिव । रजन्याः हरिद्रायाः रागः अनुलेपः रजन्यां रात्रौ रागः आसक्तिश्च सआसामस्तीतिरजनीरागिण्यस्ताभिः । सर्वतः सर्वत्र

कर्णाटचेटीभिर्भरितम् । एकत्र बालकमिव कुलालाकीर्णम् । एकत्र वृद्ध-मिव कुजराजितम् । एकत्र चित्रविद्ययेव प्रवर्धमानसकलशिशुशोभितया विन्यस्तस्वस्तिकया सर्वतोभद्रभूषणया भवनमालयालंकृतम् । एकत्र नाट-कैरिव पताकाङ्कसंधिसंगतैः, दुष्टकिरातैरिव दृष्टकूटकर्मभिः, शस्त्रैरिव सुधारैः, विचित्रैरपि सचित्रैः, सतुलैरप्यतुलैर्देवकुलैः संकुलम् । विशा-

मुखजघनचपलाभिः " उभयार्धयोर्जकारौ द्वितीयतुर्यौ गमध्यगौ यस्याः । चपलेति नाम तस्याः प्रकीर्तितं नागराजेन ॥ आद्यं दलं समस्तं भजेत लक्ष्मचपलागतं यस्याः । शेषे पूर्वजलक्ष्मा (पथ्यालक्षणवती) मुखचपला सोदिता मुनिना ॥ प्राक्प्रतिपादितमर्धे प्रथमे प्रथमेतरे तु चपलायाः । लक्ष्मश्रयेत सोक्ता विशुद्धधीभि र्जघनचपला ॥' इति लक्षणविशिष्टाभिः मुखचपलाभिः जघनचपलाभिश्चापि न आर्याभिः आर्याख्यमात्रावृत्तैरिति विरोधः । मुखे आनने जघने कटौ च चपलाभिः चञ्चलाभिः अनार्याभिः असतीभिः । कर्णाटचेटीभिः कर्णाटदेशीयाभिः चेटीभिः नायकसन्धानकुशलाभिः भरितं निबिडम् । बालस्य शिशोः क मुखमिव । कुलेति । कुलालैः कुम्भकारैः कुत्सितया लालया स्यन्दिन्या च आकीर्णं निबिडम् । कुजेति । कुजैः वृक्षैः राजितं शोभितम् । वृद्धं जरठं वस्तु तु कुत्सितया जरया जितम् । चित्रविद्यया आलेख्यविद्ययेव । प्रकर्षेण वर्धमानैः सकलैः कलावद्भिः शिशुभिः बालैश्शोभितया विन्यस्ताः रचिताः स्वस्तिकाः मौक्तिकादिक्षोदमयचतुष्काः यस्यां तथाभूतया । सर्वतोभद्रः गृहनिर्माणभेदः यद्वा सर्वतः सर्वत्र भद्राणि काञ्चनानि भू-षणं यस्यास्तया भवनानां गृहाणां मालया पङ्क्त्या अलङ्कृतम् । चित्रविद्या तु शिशुः सकलः स्वस्तिकः वर्धमान सर्वतोभद्रः इत्याख्यैः पञ्चपत्रैर्भूषिता । **पताकेति ।** पताका ध्वजवस्त्रमेव अङ्कः चिह्नं येषान्तानि पताकाङ्कानि सन्धिषु इष्टकासन्धानेषु सङ्गतानि अविभाव्यसन्धीनि चेत्यर्थः । नाटकानि तु पताका मुख्यनायककथाङ्गभू-तोपनायकचरित्रं यथा रामायणे सुग्रीवचरितम् । अङ्कः प्रबन्धविभागः सन्धयः मुख प्रतिमुख गर्भ विमर्श निर्वहणाख्याः पञ्चसन्धयः तैर्युक्तानि तैः । दुष्टैः किरातैः म्लेच्छभेदैरिव दृष्टम् कूटस्य शिखरस्य कपटस्य च कर्म येषु तै । शस्त्रैः आयु-धैरिव सुधां लेपविशेष इयद्भिः प्राप्नुवद्भिः पक्षे शोभना धारा मुखं येषान्तैः " धा-रा शस्त्रमुख फलम् " इति यादवः । विचित्रैः आलेख्यरहितैरपि अनेकप्रकारैश्च सचित्रैः चित्रसहितैः सचितः चिता चैतन्येन सहितान् त्रायन्ते रक्षन्तीति सचित्राः तैश्च । तुलया साम्येन धारणस्तम्भेन च सहितैरपि अतुलैः न तुला साम्य चलनञ्च येषान्तैः । देवकुलैः देवालयैः सङ्कुलं निबिडम् । विशालं विस्तीर्णम् । गजादिशा-

लमपि शालासंपन्नम् , चतुश्चरणसंयुक्तमपि चरणरहितम् , विट्संभृतमपि शुचिमार्गम् , सर्वत्र चत्वराधिकमपि स्थिरप्रकृति, मज्जन्महाराष्ट्रकुटुम्बिनीमुखमण्डलविधीयमानोत्फुल्लकमलशोभायास्तुङ्गतरङ्गरङ्गत्तरुणार्जुनराजीवराजमानराजहंसविराजितवारेर्वरदायास्तीरे रामणीयकरसकुण्डं कुण्डिनं नाम नगरम् ॥

४१ यस्य नातिदूरे दर्शनदूरीकृतदुरितोपप्लवाप्लवनजनितपातकभङ्गां गङ्गामुपहसन्ती स्वर्गमार्गाश्रयणनिश्रेणी पुण्यपयाः पयोष्णी वहति ॥

४२ यस्य च पाश्चिमदेशे प्रणतसुरासुरमौलिनीलमणिमरीचिचञ्चरीकचक्रचुम्बितचरणाम्भोजस्य भोजकटकूपजन्मनो जरापातितययातेः

लारहितमपि । शालाभिः वाजिसदनादिभिः सम्पन्नम् । चतुश्चरणैः चतुष्पाज्जन्तुभिः चतुर्भिः चरणैः ऋग्वेदादिभिः पादैर्वा सयुक्तमपि चरणेन सञ्चारेण चरणैः शाखाभिः पादैर्वा रहितं । चेति भिन्न पदं रणेन युद्धेन रहितञ्च । विड्भिः वैश्यैः जनैर्वा विष्ठाभिः सम्भृतमपि शुचिः शुद्धः मार्गः यस्मिंस्तत् । सर्वत्र चत्वरेण चतुष्पथेन सर्वत्र च त्वरया वेगेन च संयुक्तमपि । स्थिरा अचञ्चला प्रकृतिः स्वभावः स्थिराः स्थैर्यवन्तः प्रकृतयः अमात्यादयश्च यस्मिंस्तत् । रमणीयस्य भावः रामणीयकं तदेव रसः द्रवः जलं तस्य कुण्ड पिठर· "पिठरः स्थाल्युखा कुण्डं" इत्यमरः । कुण्डिनं नाम नगरम् । मज्जन्तीनां स्नान्तीनां महाराष्ट्रकुटुम्बिनीनां महाराष्ट्रदेशस्त्रीणां मुखानां मण्डलैः बिम्बैः समूहैर्वा । विधीयमान क्रियमाणं उत्फुल्लानां विकसितानां कमलानां शोभा यस्यास्तस्याः । उत्तुङ्गतरङ्गेषु रिङ्गन्ति चलन्ति तरुणानि प्रौढानि अर्जुनानि धवलानि यानि राजीवानि पद्मानि तेषु तद्वद्वा राजमानैः राजहंसैः विराजितं वारि यस्यास्तस्याः । वरदायाः वरदाख्यनद्याः । तीरे अस्तीति शेषः ॥

४१. **यस्येति** । यस्य पुरस्य । नातिदूरे समीपे । दर्शनेन दूरीकृतौ दुरितं पापं उपप्लवः उपद्रवश्च यस्यास्सा । अत एव आप्लवनेन स्नानेन जनितः उत्पादितः पातकस्य पापस्य भङ्गः नाशः यस्यान्तथाभूतां गङ्गां जाह्नवीं उपहसन्तीव स्थिता । स्वर्गमार्गस्य आश्रयणे गमने विषये निश्रेणी अधिरोहणी । पुनातीति पुण्यं पयः जलं यस्यास्सा पुण्यपयाः पयोष्णी तदाख्या नदी वहति प्रवहति ॥

४२. **यस्येति । पश्चिमः** । पश्चाद्भवः पश्चिमः प्रतीच्यः "अग्रादिपश्चात्" इत्यादिना डिमच् । **प्रणतेति** । प्रणतानां सुरासुराणां मौलिषु किरीटेषु (घटितानां) नीलमणीनां मरीचयः किरणा एव चञ्चरीकाः भृङ्गाः तेषां चक्रेण बृन्देन चुंबिते

प्रचण्डदण्डदाण्डिक्यदण्डनाडम्बरितगण्डपाषाणविदलितवैदर्भमण्डलस्य भगवतो भार्गवस्याश्रमः ॥

४३. यत्र च विपत्राः सन्ति साधवो न तु तरवः, विजृम्भमाण-कमलानि सरांसि न जनमनांसि, कुवलयालंकाराः क्रीडादीर्घिका न सीमन्तिन्यः, विपदाक्रान्तानि सरित्कुलानि न कुलानि ॥

किं बहुना ।

देशानां दक्षिणो देशस्तत्र वैदर्भमण्डलम् ।
तत्रापि वरदातीरमण्डनं कुण्डिनं पुरम् ॥ १८ ॥

संयुक्ते चरणाम्भोजे यस्य तस्य । भोजकटकूपे तदाख्यस्थाने जन्म यस्य तस्य । "शुक्रोभोजकटेऽभवत्" इति श्रुतेः । मरुदेशे शिवकूपः किराटकूपः जाङ्गलकूपः इत्यादिवत् कूपान्तत्वेनाधिष्ठाननाम्नः प्रसिद्धेश्च तथा व्यवहारः। जरया (विषय-सुखात्) पातितः ययातिः नहुषात्मजः येन तथाभूतस्य । अत्र कथा—वृषपर्वदैत्य-सुतां शर्मिष्ठां शुक्रसुतां देवयानीञ्च ययातिनृपतिरुपयेमे । ततोसौ शर्मिष्ठाप्रीत्या देवयानीमवजानन् "तवाङ्गे जरा पततु" इति शुक्रेणशप्तः । इति । प्रचण्डदण्डस्य उग्रशिक्षणस्य दाण्डिक्यस्य तदाख्यस्य राज्ञः दण्डनाय शिक्षणाय आडंबरितैः समा-रब्धैः इच्छामात्रेण सम्पादितैरित्यर्थः गण्डपाषाणैः च्युतस्थूलोपलैः विदलितं वि-दीर्णं वैदर्भमण्डलं विदर्भदेशः येन तस्य । अत्र कथा—दाण्डक्योनाम भोजकट-देशाधिपः शुक्रसुतां अरजःसंज्ञां क्षत्रियः किल हठात् द्विजकन्यां परिणीतवान् इति परिभूतंमन्येन शुक्रेण मन्युना पातालशैलगण्डवृष्ट्या स विदर्भदेशो नाशितः इति । **भार्गवस्य** । शुक्रस्य ॥

४३. **यत्रेति** । यत्र नगरे साधवः सन्तः विपदः आपदः त्रायन्ते रक्षन्तीति विपत्राः सन्ति तरवस्तु विपत्राः पर्णरहिताः न सन्ति अत्र श्लेषसङ्कीर्णा परिसङ्ख्या एवमुत्तरत्रापि । सरांसि कासाराः विजृम्भमाणानि विकसन्ति कमलानि येषु तानि जनानां मनांसि तु विजृम्भमाणं प्रसरत् कमलं कुत्सितं पापं येषु तानि न । क्रीडा-र्थाः दीर्घिकाः वाप्यः कुवलयानि उत्पलानि अलङ्काराः यासान्ताः । सीमन्तिन्यः स्त्रियस्तु कुवलयं कुत्सितं कटकं अलङ्कारः यासान्ताः न सरितां नदीनां कूलानि तीराणि वीनां पक्षिणां पदैः आक्रान्तानि कुलानि गृहाणि यद्वा वंशास्तु विपदा आपदा आक्रान्तानि न सन्ति ॥

**देशानामिति** । देशः वर इति शेषः । एवमुत्तरत्रापि । अत्र सारालङ्कारः । तल्लक्षणन्तु "उत्तरोत्तरमुत्कर्षस्सारइत्यभिधीयते" इति ॥ २८ ॥

४४. तत्रास्ति समस्तरिपुपक्षक्षोददक्षदाक्षिणक्षोणीपालमौलिमाणिक्यनिकषनिर्मलितचरणनखदर्पणश्चतुरुदधिपुलिनचक्रवालवालुकासंख्य-संख्यविख्यातकीर्तनीयकीर्तिसुधाधवलितवसुंधरावलयो निजभुजपञ्जरान्तरनिरुद्धशारिकायमाणरणरङ्गाङ्गणार्जितोर्जितजयश्रीः, यौवनमदमत्तकान्तकुन्तलविलासिनीनयननीलोत्पलदलमालार्च्यमानलावण्यपुण्यप्रतिमः, रविरिव नासत्यजनकः, पुरंदर इव नाकविख्यातः, गरुत्मानिव नागमाधिक्षेपी, पद्मखण्ड इव नालसहितः, व्याकरणप्रबन्ध इव नामसंपन्नः, धाम धाम्नाम्, आधारो धीरतायाः, पुरं पुरुषकारस्य,

४४. **तत्रेति ।** तत्र कुण्डिने । समस्तरिपूणां पक्षस्य वर्गस्य क्षोदे मर्दने दक्षाणां समर्थानामपि दक्षिणानां सरलानां दक्षिणदेशीयानां वा क्षोणीपालानां मौलिमाणिक्यानां किरीटरत्नानां निकषेण घर्षणेन निर्मलितः निर्मार्जितः चरणनख एव दर्पणः आदर्शः यस्य सः । चतुरुदधीनां पुलिनचक्रवालस्य द्वीपवृन्दस्य वालुकावत् सिकतावत् असङ्ख्यानि सङ्ख्यारहितानि अनेकानीत्यर्थः यानि सङ्ख्यानि युद्धानि तेषु विख्याता प्रसिद्धा कीर्तनीया च या कीर्तिः सैव सुधा लेपविशेषः तया धवलितः शुभ्रः कृतः वसुन्धरावलय भूमण्डल येन तथोक्तः । निजभुज एव पञ्जरं नीड तस्य अन्तरे मध्ये निरुद्धा बद्धा या ( श्रृणातिदुःख विरहिणीनामिति ) शारिका पक्षिभेदः तद्वदाचरिता रणरङ्गस्य युद्धभुवः अङ्गणे चत्वरे आर्जिता सम्पादिता ऊर्जिता स्थिरा जयश्रीः यस्य तथोक्तः । यौवनमदमत्तानां कान्तानां रम्याणां कुन्तलविलासिनीनां कुन्तलदेशस्त्रीणां यद्वा कान्तकुन्तलानां रम्यालकानां विलासिनीनां स्त्रीणां नयननीलोत्पलदलानां मालाभिः अर्च्यमाना पूज्यमाना लावण्यमेव पुण्या पवित्रा प्रतिमा अर्चाबिम्ब यस्य तथोक्तः । रविः सूर्यइव । असत्यस्य जनकः उत्पादयिता अनृतवक्ता न यद्वा सत्यजनकः ना नरः पक्षे नासत्ययोः अश्विनोः जनकः पिता । पुरन्दरः इन्द्र इव । अकविषु कुकुविषु· ख्यातः प्रतीतः न यद्वा कविख्यातः ना पुरुषः । पक्षे नाके स्वर्गे विख्यातः । गरुत्मान् गरुड इव । आगमान् शास्त्राणि अधिक्षिपति तिरस्करोतीति तच्छीलः न पक्षे नागानां सर्पाणां मां लक्ष्मीं अधिक्षिपति लुम्पतीति तच्छीलः पद्मानां खण्डः शकल इव षण्ड इति पाठे समूह इवेत्यर्थः अलसेभ्यः मन्देभ्य हितः न । पक्षे नालेन काण्डेन सहितः । व्याकरणग्रन्थइव आमेन रोगेण सम्पन्न न पक्षे नामभिः प्रातिपदिकै सम्पन्नः । धाम्नां तेजसां धाम गृहं "धाम शक्तौप्रभावे च तेजोमन्दिरजन्मसु " इति विश्वः । धीरतायाः धैर्यस्य आधारः आस्पदं पुरुषस्य कारः कृतिः पौरुषमित्यर्थः तस्य पुरं

आश्रयः श्रेयसां श्रियां श्रुतीनां च, राजा रणाङ्गणेष्वगणितभीर्भीमो नाम ॥

४५. यस्यानवरतमुत्कृष्टालयः क्रिडावनपादपाः पौरलोकश्च, अपरुषो दायादा वाग्विभवश्च, विमत्सराःसभासदो देशश्च, विकसद्द्रुचयोऽङ्गावयवाः क्रीडापर्वतश्च, अपराजयो मण्डनमणयः सेनासमूहश्च, अगतरुजो वने विनाशमन्वभवन्नितान्तं रिपवः पुष्पप्रकरश्च ॥

४६. तस्य च कंदर्पकमनीयकान्तेर्मत्ताः करिणः सदामानो न

नगरम् । श्रेयसां शुभानां श्रियां सम्पदां श्रुतीनां वेदानाञ्च आश्रयः रणांगणे युद्धभूमावपि अगणिता भीः भयं येन तथोक्तः भीमो नाम राजा अस्ति ॥

४५. **यस्येति** । यस्य राज्ञः क्रीडावने (स्थिताः) पादपाः वृक्षाः अनवरतम् सदा उत्कृष्टा उत् अधिकं (परिमलेन) आकृष्टाः अलयः भृङ्गाः येषु ते।पौरलोकः पुरजनश्च उत्कृष्टाः आलयाः गृहाणि यस्य तथोक्तः । अत्र बहुत्वैकत्वश्लेषः तुल्ययोगिताच । एवमुत्तरत्रापि।दाय वित्तं अदन्तीति दायादाः यद्वा आददत इत्यादाः दायस्य आदाः दायादाः सपिण्डाः " दायोदानेयौतकादि धने वित्ते च पैतृके " इति यादवः । " दायादस्तु भवेत् पुंसि सपिण्डे तनयेपि च" इति मेदिनी । अपगता रुट् कोपः येभ्यस्तेअपरुषः। वाचः वचनस्य विभवः महिमा न परुषः अपरुपः अरूक्षः स्निग्धइत्यर्थः । सभायां सीदन्तीति सभासदः सभ्याः विगतः मत्सरः द्वेषः येभ्यस्ते विमत्सराः । देशश्च वयः पक्षिणः एषु सन्तीति विमन्ति सरांसि यस्मिन् सः विमत्सराः । अङ्गस्य अवयविनश्शरीरस्य अवयवाः करचरणादयः " अङ्गं गात्रे प्रतीकोपाययोः पुभूम्नि नीवृति । क्लीबैकत्वेत्वप्रधाने त्रिष्वङ्गवतिचान्तिके " इति मेदिनी। विकसन्ती दीप्यमाना रुचिः कान्तिर्येषु । क्रीडापर्वतश्च विकसन् द्रूणां तरूणां चयः सङ्घः यस्मिन् । मण्डनमणयः भूषणरत्नानि अपगता राजिः सन्धिः दुष्टरेखा वा येभ्यस्ते । सेनासमूहश्च न पराजीयत इत्यपराजयः । अगताः अनष्टाः रुजः पीडाः येषान्ते रिपवः अरयः इतः प्राप्तः अन्तः मरणं यस्मिन् तं इतान्त विनाशं विशिष्टं नाशं भयाददर्शनं वने अन्वभवन् । अगतरुजः पर्वतवृक्षजातः पुष्पाणां प्रकरः समूहश्च । नितान्तं भृशं वने विनाशं प्रध्वंसं अन्वभवन् ॥

४६. **तस्येति** ॥ च किञ्च कन्दर्पवत् कमनीयकान्तिः रम्यशोभस्तस्य । तस्य भीमनृपतेः । मत्ताः मदयुक्ताः करिणः गजाः सहदाम्ना सन्दानेन पादबन्धनशृङ्खलयेति यावत् । वर्तन्त इति सदामानः सन्ति। मानिनी मानवती युवतिरेव लोकः

मानिनीलोकः, कृतविटपानमनाः क्रीडोद्यानतरवो नावरोधजनः, कट-कालंकृतदोषः सीमन्तिन्यो न परिपन्थिकः ॥

४७. यस्य च चरणाम्भोजयुगलं विमलीक्रियते नमज्जनेन न मज्जनेन॥

४८. यः शृङ्गारं जनयति नारीणां नारीणाम् ॥

४९. यः करोत्याश्रितस्य नवं धनं न बन्धनम् ॥

५०. यो गुणेषु रज्यते नरमणीनां न रमणीनाम् ॥

५१. यस्य च नमस्याग्रहारेषु श्रूयते नलोपाख्यानं न लोपाख्यानम् ॥

जनः सदा मानः गर्वः यस्य स तथाभूतः नास्ति । अत्र बहुत्वैकत्वयोः श्लेषः परिसङ्ख्या च । क्रीडार्थे उद्याने स्थिताः तरवः कृतं विटपानां शाखानां आनमनं अवनमनं येषान्तथोक्तास्सन्ति अवरोधजनः अन्तःपुरस्त्रीजनः कृतं विटानां पाने चुम्बने मनः येन तथोक्तो नास्ति । सिमन्तिन्यः स्त्रियः कटकैः वलयैः अलङ्कृतौ दोषौ बाहू यासान्तथोक्तास्सन्ति। परि ( दोषाख्यानं ) पन्थयितुं (गन्तुं ) शीलवान् परिपन्थी स एव परिपन्थिकः शत्रुः पारिपन्थिक इति पाठे पन्थानं वर्जयित्वा व्याप्य वा तिष्ठति हन्ति वा पारिपन्थिकश्चोरः कटके राज्ये अलं अत्यर्थं कृतः दोषः उपद्रवः येन तथोक्तो नास्ति ॥

४७. **यस्येति** ॥ यस्य चरणाम्भोजयोः युगलं द्वयम् । **नमज्जनेन** । नमताजनेन विमलीक्रियते निर्मलीक्रियते मज्जनेन क्षालनेन न विमलीक्रियते । अत्र परिसङ्ख्यालङ्कारः । एवमुत्तरत्रापि ॥

४८. **य इति** ॥ यः नारीणां स्त्रीणां शृङ्गारं कामोत्सवं "कामध्वजः कामोत्सवः शृङ्गारः कामविक्रिया" इति यादवः । जनयति अरीणां शत्रूणां शृङ्गारं न जनयति ॥

४९. **य इति** ॥ यः आश्रितस्य स्वाश्रितजनस्य नवं नूतन स्तुत्य वा धनं करोति वन्धनं ( वबयोरभेदात् ) बन्धनं न करोति ॥

५० **य इति** ॥ यः नरमणीनां पुरुषश्रेष्ठानां गुणेषु शौर्यादिषु रज्यते आसक्तो भवति रमणीनां स्त्रीणां गुणेषु रूपादिषु न रज्यते ॥

५१. **यस्येति** । यस्य ( सम्बन्धिषु ) नमः कर्तुं योग्येषु नमस्येषु पूज्येषु "नमोवरिवश्चित्रङः क्यच्" इति क्यच् । तदन्तात्कृत्यप्रत्ययः । अग्रहारेषु विप्रग्रामेषु नलस्य उपाख्यानं चरितं भारतप्रतीतं यद्वा नलस्य तव उपाख्यानं ( शौर्यादिगुणानां) कथनं श्रूयते लोपस्य चोरादिभिः द्रव्यादिनाशस्य आख्यानं कथनं न श्रूयते॥

५२. यस्य च राज्ये साक्षरस्य पुस्तकस्य बन्धः, सगुणस्य कार्मुकस्याकर्षणम्, सुवंशप्रभवस्य च्छत्रस्य दण्डः, सुजातेरुद्यानविशेषस्योत्खननम्, कुलीनस्य कन्दस्योन्मूलनारम्भः, सन्मार्गलग्नस्य पुनर्वसुभाजश्चन्द्रस्यैव ग्रहणालोकनमभूत् ॥

किं बहुना ।

देवो दक्षिणदिङ्मुखस्य तिलकः कर्णाटकान्ताकुच-
क्रीडाशैलमृगः प्रतापकदलीकन्दः स किं वर्ण्यते ।
यस्यारातिकरीन्द्रकुम्भरुधिराक्लिन्नासिदंष्ट्राङ्कुरा
शौर्यश्रीर्भुजदण्डमण्डपतले सिंहीव विश्राम्यति ॥ २९ ॥

५२. **यस्येति** । यस्य राज्ये साक्षरस्य लिखिताक्षरस्य पुस्तकस्य बन्धः सूत्रादिना बन्धनम् । अत्र आर्थवर्जनीयापरिसङ्ख्या । नतु साक्षरस्य (अधीताक्षरस्य ) जनस्य बन्धः इति वर्जनीयस्य शब्देनाप्रतिपादनात् । एवमुत्तरत्रापि । सगुणस्य गुणेन ज्यया युक्तस्य कर्मणेप्रभवति कार्मुकं धनुस्तस्य "कर्मणउकञ्" इत्युकञ् । आकर्षणं कर्णान्तप्रापणं ( नतु सगुणस्य गुणेन बुध्या सहितस्य जनस्य आकर्षणं आक्षेप इत्यार्थं ) सुवंशप्रभवस्य शोभनवेणुजातस्य छत्रस्य आतपत्रस्य दण्डः यष्टिः ( नतु सदन्वयजस्य जनस्य शिक्षणमित्यार्थं ) सुजातेः शोभनमालतीयुक्तस्य उद्यानविशेषस्य उपवनभेदस्य उत्खननं वृक्षपुष्ट्ये आलवालमार्दवायोत्कृष्टं खननं भुवोविदारण । ( नतु सुजातेः विप्रादिवर्णस्य उत्खननं उच्छेदनमित्यार्थं ) कुलीनस्य कौ भूवि लीनस्य गुप्तस्य कन्दस्य मूलस्य सूरणस्यवा उन्मूलने उत्खनने आरम्भः ( नतु सत्कुलभवस्य जनस्य उन्मूलनप्रयत्न इत्यार्थं ) सतां नक्षत्राणां मार्गे लग्नस्य सक्तस्य यद्वा सत् विद्यमानं मृगस्येद मार्गं लग्नं सक्तं संयोगः यस्य तस्य । पुनर्वसू नक्षत्रं भजतीति तथोक्तस्तस्य चन्द्रस्यैव ग्रहणस्य राहुयोगस्य आलोकन अभूत् ( नतु सन्मार्गे सतां पथि लग्नस्य रतस्य पुनः किञ्च वसुभाजः धनिनः जनस्य ग्रहणे बन्द्यां "ग्रहणं बन्दिरादानमादरोर्काद्युपप्लव." इति यादवः । आलोकनमभूदित्यार्थं ) ॥

**देव इति** ॥ दक्षिणदिशः कस्याश्चिन्नायिकायाश्च मुखं प्रारम्भः आननञ्च तस्य तिलकः विशेषकं तद्दिशोलङ्कारभूत इत्यर्थः । कर्णाटकान्तानां कर्णाटदेशीयस्त्रीणां कुचावेव क्रीडाशैलौ तयोः मृगः हरिणः कर्णाटस्त्रीरतितत्पर इत्यर्थः । प्रताप एव कदली मोचा तस्याः कन्दः मूलं प्रतापाश्रय इत्यर्थः । सः देवः भीमनृपः किं

५३. तस्य च महामहीपतेरात्मरूपापहसितसमस्तसुरसुन्दरीसौन्दर्यसारसंपत्तिकलङ्ककुलकन्दकन्दलीकंदर्पदर्पगजेन्द्रावष्टम्भस्तम्भयष्टिरखिलजननयनकुरङ्गवागुरा रामणीयकपताकायमानोद्भिन्ननवयौवनश्रीः, शृङ्गारस्यागारम्,अवनिर्वनिताविभ्रमाङ्कुराणाम्, आभोगः सौभाग्यभागस्य, रङ्गशाला रागवृत्तनृत्तस्य, सर्वान्तःपुरपुरंध्रिकाप्रधानभूताऽस्ति प्रिया प्रियंगुमञ्जरी नाम ॥

५४. यस्याः पद्मानुकारिणी कान्तिर्लोचने च, रम्भाप्रतिस्पर्धिनी रूप-

वर्ण्यते अनिर्देश्यमहिमत्वात् किमिति वर्ण्यते । अरातीनां शत्रूणां करीन्द्राणां गजेन्द्राणां कुम्भेषु मस्तकेषु ( स्थितैः ) रुधिरैः रक्तैः क्लिन्नाः सिक्ताः असयः खड्गाः दंष्ट्राङ्कुराः दन्तप्ररोहा इव यस्यास्तथाभूता शौर्यश्रीः शौर्यलक्ष्मीः सिंहीव सिंहस्त्रीव यस्य भीमस्य भुजदण्डः मण्टपतलमिव तस्मिन् विश्राम्यति विश्रान्ति गच्छति । अत्र रूपकोपमे अलङ्कारौ । शार्दूल......वृत्तम् ॥२९॥

५३. **तस्येति** ॥ महतः श्रेष्ठस्य महीपतेः तस्य भीमस्य । आत्मरूपेण अपहसिता समस्तसुरसुन्दरीणां सौन्दर्यस्य सारसपत्तेः श्रेष्ठसंपदः कलकः चिह्नमेव कुले तटाके (जातस्य) कन्दस्य मूलस्य कन्दली अङ्कुरः लता वा यया तथोक्ता । लुटयत्काञ्चयइत्यादिवत् समासान्तविधिरिह नादृतः । कन्दर्पदर्पः कामगर्वएव गजेन्द्रस्तस्य अवष्टम्भार्थां वन्धनार्थां स्तम्भयष्टिः स्थूणादण्डः । अखिलजननयनान्येव कुरङ्गाः हरिणाः तेषां वागुरा जालम् । अवागुरते हिनस्तीति वागुरा "गुरी हिंसायाम्" इति धातोः । "इगुपध" इति कः । "वष्टिभागुरिः" इत्यकारलोपः । रामणीयकपताका रमणीयताख्यापकवैजतन्ती सेवाचरन्ती उद्भिन्ना उद्भूता नवा नूतना यौवनश्रीः यस्यास्तथोक्ता । श्रृङ्गारस्य कामोत्सवस्य अगारं गृहम् । वनितानां स्त्रीणां विभ्रमाः विलासा एव अङ्कुराः प्ररोहास्तेषां अवनिः भूः । शोभनः भगः श्रीः यस्यास्सा सुभगा सुन्दरी तस्याः भावः सौभाग्यं सौन्दर्यम् । तदेव भागः भाग्यं तस्य "भागो रूपार्धके भाग्यैकदेशयोः" इति हैमः । आभोगः परिपूर्णता यद्वा आ अभिव्याप्तः भोगः शरीरं स्थानमित्यर्थ । रागः अनुरागः तस्य वृत्त वृत्ति यद्वा रागयुक्तं वृत्तं चरित्र तदेव नृत्तं तस्य रङ्गशाला नर्तनस्थानम् । सर्वासां अन्तःपुरपुरन्ध्रिकाणां अन्त पुरस्त्रीणां प्रधानभूता मुख्यभूता प्रियंगुमञ्जरीति नाम प्रसिद्धा प्रिया भार्या अस्ति ॥

५४. **यस्या इति** । यस्याः प्रियंगुमंजर्याः कान्तिः पद्मां लक्ष्मीं ताच्छील्येनानुकरोतीति पद्मानुकारिणी स्त्रीलिङ्गप्रथमैकवचनं लोचने नेत्रद्वयञ्च पद्मे अब्जे

संपत्तिरूरुमण्डले च, सुमनोहारिणी केशकबरी भ्रूभङ्गचक्रे च, भ्रमरकोद्भासिनी ललाटपट्टिका कर्णोत्पले च, प्रवालानुकारिणी दन्तच्छदच्छाया करचरणयुगले च ॥

५५. यस्याः सुवर्णमयं वचनं नूपुरं च पदे पदे मनो हरति ॥

५६. यस्याः सुमधुरया वाचा सदृशी शोभते कण्ठे कुसुममालिका। अलिकालयाऽप्यलकवल्लरीमालया सह विराजते तिलकमञ्जरी ॥

ताच्छील्येनानुकुरुतः इति पद्मानुकारिणी नपुंसकलिङ्गप्रथमाद्विवचनं । प्रथमैकत्वद्वित्वयोः स्त्रीक्लीबयोश्च श्लेषः । एवमुत्तरत्रापि । रूपस्य सौन्दर्यस्य सम्पत्तिः सम्पत् रम्भां रम्भाख्यामप्सरसं प्रतिस्पर्धते अभिभवितुमिच्छतीति तच्छीला । ऊरुमण्डले ऊरुबिंबौ च रम्भे कदल्यौ प्रतिस्पर्धेते इति तच्छीले । केशानां कबरी मार्जनाबन्धविशेषः सुमनोभिः पुष्पैः हारीणी रम्या भ्रूभङ्गयोः भ्रुकुट्योः चक्रे मण्डलेच यद्वा भ्रूभङ्गावेव चक्रे सुष्टु मनोहारिणी मनोज्ञे । ललाटपट्टिका ललाटभूषणं "पट्टीललाटभूषायां पट्टीलाक्षाप्रसादने" इति विश्वः । भ्रमरकैः चूर्णकुन्तलैः उद्भासते अधिकं शोभत इति तच्छीला । कर्णोत्पले कर्णावतंसनीलोत्पलेच भ्रमरकैः भृङ्गैः उद्भासेते इति तच्छीले "अथ भ्रमरको भृङ्गे गैरिके चूर्णकुन्तले" इति मेदिनी । दन्तच्छदस्य ओष्ठस्य च्छाया कान्तिः प्रवाल विद्रुम पल्लवं वा अनुकरोतीति तच्छीला करौच चरणौच करचरणं युगलश्च युगलश्च युगले करचरणस्य युगले करचरणयुगले द्वंद्वान्ते श्रूयमाणं प्रत्येकं संबध्यत इति न्यायात् करयुगल चरणयुगलश्चेत्यर्थ.। प्रवाल अनुकुरुतः इति तच्छीले । अत्रश्लेषस्तुल्ययोगिताच ॥

५५. **यस्या इति** । यस्याः।**सुवर्णमयम्** । शोभनः वर्णः अकारादिः तत्प्रचुरं स्वर्णविकृतश्च वचनं वाक्ये नूपुरं मञ्जीरश्च । पदेपदे प्रतिपद । प्रकृतिविभक्तिसमुदायः पादन्यासश्च पदं । तत्र तत्र मनः हरति ॥

५६. **यस्या इति** ॥ अत्र तृतीयाप्रथमयोः श्लेषः । यस्याः कण्ठे सुष्टु मधुनः मकरन्दस्य रयः प्रसरः यस्यास्सा सुमधुरया कुसुममालिका सुष्टु मधुरा रुचिरा तया सुमधुरया यस्याः वाचा वचनेन सदृशी शोभते । अत्र श्लिष्टोपमा । अलिकं ललाट आलयः स्थानं यस्यास्सा अलिकालया यस्याः तिलकं विशेषकमेव मञ्जरी वल्लरी । अलिवत् भृङ्गवत् कालः श्यामो वर्णः यस्यास्सा अलिकाला तया अलिकालया यस्याः अलकाः कुन्तला एव वल्ल्यः मञ्जर्यः तासां मालया पङ्क्त्या सह विराजते । अपीति चार्थे । शोभते चेत्यर्थः । अत्र श्लिष्टा सहोक्तिः ॥

किं बहुना ।

तस्याः कान्तिनिरुद्धमुग्धहरिणीलीलाचलच्चक्षुष-
स्तारुण्यस्य भरादनालसलसल्लावण्यलक्ष्मीरसः ।
लुभ्यल्लोकविलोचनाञ्जलिपुटैः पेपीय्यमानोऽपि स-
न्नङ्गेष्वेव न माति सुन्दरतरो रङ्गंस्तरङ्गैरिव ॥ ३० ॥

९७. एवमनयोः सकलसंसारसुखरसास्वादमुदितमनसोर्यान्ति दिवसाः ॥

९८. कदाचिच्चटुलतरतरुणषट्चरणचक्रचुम्बनाक्रमणभरभज्यमानमञ्जरीजालगलदमन्दमकरन्दबिन्दुकर्दमिलेषु विविधाङ्गविहंगविहारविदलितदलदन्तुरान्तरालेषु स्मरबन्धुसुगन्धिगन्धवाहवाजिबाह्यालीषु वग्दायाः

**तस्या इति** ॥ कान्त्या अर्थाल्लोचनकान्त्या निरुद्ध अभिभूतं मुग्धहरिणीनां सुन्दरकुरङ्गीणां लीलया विलासेन चलत् चक्षुः यया तथाभूतायाः तस्याः प्रियङ्गुमञ्जर्याः तारुण्यस्य यौवनस्य भरात् अतिशयात् न आसमन्तात् अलसं मन्द अनालसं अमन्दं यथा तथा लसन् प्रकाशमानः लावण्यस्य कान्तिविशेषस्य लक्ष्म्यास्सम्पदः रसः सारः एव रसः जलाल्लुभ्यद्भिः तृष्यद्भिः लोकैः विलोचनैरेव अञ्जलिपुटैः प्रसृतकरसम्पुटैः पेपीय्यमानः भृशं पीयमानस्सन्नपि सुन्दरतरः अतिशयेन रम्यः तरङ्गैः वीचिभिः रङ्गन् विलसन्निव यद्वा चलन्निव सन् अङ्गेषु अवयवेषु न माति एव उद्रिक्तत्वादवकाशं न गच्छत्येव। रसोहि भरादजिह्मो लसति। तरङ्गैश्च रङ्गति। पीयमानोपीत्यत्र अपिशब्दादापाततो विरोधोपि भृशं पुनःपुनः पाने उद्वेजनादरम्यता रसस्य क्षीणता च स्यात् नात्र तथेति । अत्र उपमारूपकोत्प्रेक्षालङ्काराः । शार्दूलविक्रीडित वृत्तम् ॥ ३० ॥

५७. **एवमिति** ॥ एवं सकलानि संसारसुखान्येव रसाः तेषां आस्वादेन अनुभवेन मुदितमनसोः अनयोः प्रियङ्गुमञ्जरीभीमयोः । दिवसाः यान्ति गच्छन्ति॥

५८. **कदेति** ॥ कदाचित् अतिशयेन चटुलानां चञ्चलानां तरुणानां यूनां षट्चरणानां भ्रमराणां चक्रेण बृन्देन चुम्बनाय मकरन्दपानाय यदाक्रमण आक्रान्तिः तदेव भरः तेन भज्यमानानां मञ्जरीणां जालात् समूहात् गलतां स्रसमानानां अमन्दानां मकरन्दानां बिन्दुभिः कर्दमः पङ्कः एषान्तानि कर्दमिलानि पङ्किलानि तेषु "पिच्छादित्वादिलच्" । विविधाङ्गानां विचित्राङ्गानां विहङ्गानां पक्षिणां विहारेण सञ्चारेण विदलितैः खण्डितैः दलैः पत्रैः दन्तुरं निबिड अन्तरालं मध्य येषान्तथोक्तेषु । स्मरस्य कामस्य बन्धुः सहायः शोभनः गन्धः यस्य सः सुगन्धिः " गन्धस्येदुत्पूतिसुसुरभिभ्यः " इति इकारोन्तादेशः । यः गन्धवाहः

पुण्यपुलिनपालिपादपतलेषुरममाणयोः परिणतेन्द्रवारुणारुणकपोलकान्ति-रुद्धुषितदेहपिण्डकण्डूयनाकूततरलितकरकिसलया बालकमेकमुदरदे-शालग्नमपरमपिपृष्ठप्रतिष्ठितमुद्वहन्ती कापि कपिकुटुम्बिनी दृष्टिपथमवा-तरत् ॥

५९. तां चावलोक्य चेतस्यास्पदमकरोत्तयोरनपत्ययोर्विषमविषादवेद-नाव्यतिकरः ॥

६०. करपत्रधाराकर्तनदुःसहदुःखदूनमनसोर्वैमनस्यमभूद्भूम्नि राज्ये जने जीविते च । किमनेनाधिपत्येनापत्यशून्येन ॥

६१. सर्वथा सकलसुरासुरकिरीटकोटिकोणमणिमरीचिचञ्चरी-

वात. स एव वाजी अश्वः तस्य बाह्याः बहिर्भवाः आलयः सेतवः बन्धनस्थानानि तत्प्रायेषु । वरदायाः वरदानद्याः पुण्यानां पवित्राणां पुलिनानां सैकतानां पालिषु पङ्क्तिषु स्थितानां पादपानां तलेषु रममाणयोः क्रीडतोः तयोः परिणतं परिपक्कं इन्द्रवारुण इन्द्रवारुणीफलमिव (पेत्तुम्मट्टीति द्राविड्यां) अरुणा रक्ता कपोलयो। गण्डयोः कान्तिर्यस्यास्सा । उद्धुषितानां उद्धुतानां शब्दितानां वा देहस्य शरीरस्य पिण्डानां अवयवानां एकदेशानां वा कण्डूयने कण्डूतौ आकूतेन अभिप्रायेण तर-लिते कम्पिते करकिसलये यस्यास्तथाभूता । उदरदेशे जठरभुवि लग्न सक्त एकं बालकं पृष्ठे प्रतिष्ठित सबद्धं अपरं बालकमपि उद्वहन्ती कापि कपिकुटुम्बिनी वा-नरी दृष्टिपथं नयनमार्गं अवातरत् अवतीर्णा दृष्टेत्यर्थः ॥

५९. **तामिति** ॥ **आस्पदं** । पदं । **अनपत्ययोः** । अपत्यरहितयोः । **विषमेति** । विषमः तीक्ष्णः विषादेन अवसादेनन जातायाः व्यथायाः शरीरपी डायाः व्यतिकरः संपर्कः ॥

६०. **करेति**।करपत्रस्य क्रकचस्य धारया अग्रेण कर्तनवत् च्छेदनवत् दुस्स-हेन सोढुमशक्येन दुःखेन दूनं तस "टुदु उपतापे" इति धातोःक्तः "दुग्वोर्दीघश्च" इति नत्वम्।मनः ययोःतयोः। बहोर्भावः भूमा महत्वम् तस्मिन् भूम्नि बहुशब्दात् "पृथ्वा-दिभ्यः" इति इमनिचि "बहोर्लोपोभूचबहोः" इति भूरादेशः इमनिच इकारस्य लोपश्च । राज्ञः कर्म भावोवा राज्यन्तस्मिन् जने मित्रादिजने जीविते प्राणधारणे-च । वैमनस्यं विगतमनस्त्वं अभूत् । अपत्येन तोकेन शून्येन अनेन अधिपतेर्भावः आधिपत्यन्तेन किंप्रयोजनमितिशेषः ॥

६१. **सर्वथेति** । सर्वथा सर्वैः प्रकारैः सकलसुरासुराणां किरीटकोटीनां कोणे अग्रे ( स्थितानां ) मणीनां अर्थान्नीलरत्नानां मरीचिभिरेव चञ्चरीकैः भृङ्गैः चुं बिते चरणांबुजेयस्यतं । अम्बिकाप्रिय पार्वतीपति महेश्वरं शिवं प्रतिपद्यामहे श-

कचुम्बितचरणाम्बुजमम्बिकाप्रियं प्रतिपद्यामहे महेश्वरमित्यन्योन्यमालोचयां चक्रतुः ॥

६२. अथ विपुलवियद्विलङ्घनश्रमप्रशमनार्थमरुणेन वारुणीं प्रतिपानार्थमिवावतार्यमाणेषु रविरथतुरंगमेषु, अपरासक्ते दिवसभर्तरि शोकभरादिव तमःपटलेनापूर्यमाणामाश्वासयितुमिव पूर्वां दिशमभिधावमानासु पादपच्छायासु, हारीतहरितहरिहारिणस्तरणेररण्यान्तराच्च मन्दमपवर्तमानेषु गोमण्डलेषु, अस्ताचलवनदेवतादत्तरक्तचन्दनार्घसलिलप्लवप्लाव्यमान इव लोहितायति पश्चिमाशामुखे, वारविलासिनीभिः कपोलमण्डलीमण्डनाय क्रियमाणेषु पत्रभङ्गेषु । भयेनेव पादपैः प्रारब्धे पत्रसंकोचकर्मणि, विघटिष्यमाणचक्रवाककामिनीकरुणकूजितव्याजेन दि-

रणं गच्छामः इति अन्योन्य परस्परं आलोचयाञ्चक्रतुः आलोचितवन्तौ ॥

६२. **अथेति** ॥ अथानन्तरं विपुलायाः विशालायाः वियतः नभसः विलङ्घनेन तरणेन (जातस्य) श्रमस्य प्रशमनार्थं अरुणेन सूर्यसारथिना रविरथतुरङ्गमेषु पानार्थमिव (अत्रोत्प्रेक्षा) वारुणीं प्रतीचिं सुराञ्च प्रति लक्ष्यीकृत्य अवतार्यमाणेषु अवरोप्यमाणेषु सत्सु । दिवसभर्तरि सूर्ये अपरस्यां प्रतीच्यां नायिकान्तरे च आसक्ते सम्बद्धे आशावति च सति शोकस्य भरात् अतिशयादिव (अत्रोत्प्रेक्षा) तमसः ध्वान्तस्य मोहस्य च पटलेन समूहेन आसमन्तात् पूर्यमाणां पूर्णां क्रियमाणां पूर्वां दिशं प्राचीं अग्रमहिषीञ्च आश्वासयितुं सान्त्वयितुमिव (अत्रोत्प्रेक्षा) पादपानां वृक्षाणां छायासु पूर्वान्दिशं अभिधावमानासु सतीषु हारीतैः शुकाभपक्षिभिरिव हरितैः हरिद्वर्णैः हरिभिः अश्वैः हरति गच्छतीति तच्छीलात् पक्षे हारीतैः हारीतपक्षिभिः हरितैः शाड्वलैः हरिभिः बानरैश्च हारिणः रम्यात् तरणेः सूर्यात् अरण्यस्य अन्तरात् मध्याच्च । गोमण्डलेषु किरणसमूहेषु धेनुवृन्देषुच । मन्दं शनैः अपवर्तमानेषु चलत्सु सत्सु । अस्ताचले चरमगिरौ (स्थिताभिः) वनदेवताभिः दत्तेन रवये वितीर्णेन रक्तचन्दनमिश्रेण अर्घसलिलप्लवेन पूजार्थतीर्थप्रवाहेण प्लाव्यमाने व्याप्यमान इव (अत्रोत्प्रेक्षा) पश्चिमाशायाः प्रतीच्याः मुखे प्रारम्भे नायिकावचनेचेतिध्वन्यते लोहितायति लोहिते रक्ते भवति सति "लोहितादि"इत्यादिना क्यष् । वारविलासिनीभिः गणिकाभिः कपोलमण्डलीनां गण्डदेशानां मण्डनाय अलङ्करणाय पत्रभङ्गेषु पत्रवल्लीसज्ञविलेपनाचित्रेषु पत्राणां भञ्जनेषुच । क्रियमाणेषु सत्सु भयेन पत्रभञ्जनभयेनेव (अत्रोत्प्रेक्षा) पादपैः वृक्षैः पत्राणां दलानां सङ्कोचे मुकुलीभाव एव कर्मणि क्रियायाम् । प्रारब्धे उपक्रान्ते सति । विघटिष्यमाणानां विरहं प्राप्स्य-

वसभर्तुरस्ताचलगमनं निवारयन्तीभिरिव विरहविधुराभिः कमलिनीभिर्विधीयमानेषु प्रार्थनाप्रणामाञ्जलिपुटेष्विव कमलमुकुलेषु, क्रमेण पश्चिमाम्भोधितरङ्गान्तरतस्तरुणतरताम्रतामरसानुकारि केसरायमाणरश्मिमञ्जरीजालजटिलमवलोक्य तरणिमण्डलमतिसंभ्रमभ्रमद्भ्रमरनिकुरम्ब इव प्रधावमाने दूरं तिमिरपटले, कृष्णागुरुपङ्कपत्रभङ्गभूष्यमाणेष्विव दिगङ्गनामुखेषु, कोकिलकलापैराक्रम्यमाणेष्विव वनान्तरेषु, विकचकुवलयबहलमेचकरुचिनिचयश्यामलीक्रियमाणेष्विव सलिलाशयेषु, तापिच्छगुच्छच्छदच्छाद्यमानास्विव वनवृतिषु, नृत्यत्कलापिकुलकलापैः कालीक्रियमाणेष्विव शैलशिरःशिलातलेषु, कज्जललेख्याचित्रचर्च्यमाना-

तां चक्रवाककामिनीनां कोकाङ्गनानां करुणकूजितव्याजेन दुःखध्वनिमिषेण दिवसभर्तु रवेः अस्ताचलं प्रति गमन निवारयन्तीभिरिव (अत्रोत्प्रेक्षा) विरहेण रविवियोगेन विधुराभिः विकलाभिः विषण्णाभिरित्यर्थः। कमलिनीभिः पद्मिनीभिः प्रार्थनायै याचनायै प्रणामाञ्जलिपुटेषु नमस्काराञ्जलिसपुटेष्विव (अत्रोत्प्रेक्षा) कमलमुकुलेषु पद्मकोशेषु विधीयमानेषु क्रियमाणेषु सत्सु। पश्चिमांभोधेः तरङ्गान्तरतः वीचिमध्ये। सार्वविभक्तिकस्तसिः। तरुणतरं अतिप्रौढ ताम्रं रक्तं तामरस पद्मं अनुकरोतीति तच्छील। केसरवत् किञ्जल्कवदाचरन्तः रश्मयः किरणा एव मञ्जर्यः तासां जालेन वृन्देन जटिलं निबिडम्। तरणेः रवेः मण्डल बिम्बम्। अवलोक्य। अतिसम्भ्रमेण अतित्वरया भ्रमतां भ्रमराणां निकुरुम्बे सङ्घइव (अत्रोत्प्रेक्षा) तिमिरपटले तमःपुञ्जे क्रमेण दूर प्रधावमाने प्रसरति सति। **दिगिति**। एतदादिवाक्येषु तमोनिबिडेष्विति योज्य दिश एव अङ्गनाः स्त्रियः तासां मुखेषु अग्रभागेष्वेव मुखेषु वक्त्रेषु। कृष्णागरुपङ्केन श्यामागरुवृक्षकर्दमेन (कृतैः) पत्रभङ्गैः विलेपनचित्रैः भूष्यमाणेष्विव अलंक्रियमाणेष्वित्युत्प्रेक्ष्यमाणेषु सत्सु। वनान्तरेषु वनमध्येषु।कोकिलकलापैः पिकसमूहैः आक्रम्यमाणेष्विव व्याप्यमानेष्वित्युत्प्रेक्ष्यमाणेषु सत्सु।सलिलाशयेषु ह्रदेषु विकचानां स्फुटानां कुवलयानां नीलोत्पलानां बहलानां अधिकानां मेचकरुचीनां श्यामकान्तीनां निचयेन वृन्देन श्यामलीक्रियमाणेष्विव। वनस्य वृतिषु संवरणभागेषु तापिञ्छानां तमालानां गुच्छच्छदैः स्तबकदलैः छाद्यमानासु स्तीर्यमाणास्विव। **शैलेति**। पर्वतशिखरशिलाप्रदेशेषु। **नृत्यदिति**। नृत्यन्मयूरवृन्दबर्हैः। **कालीति**। श्यामीक्रियमाणेष्विव। **भवनेति**। गृहकुड्येषु। कज्जललेख्येन अञ्जनद्रव्यरचितचित्रेण चित्रं अद्भुत यथातथा चर्च्यमानासु विलेप्यमानास्विव। **पान्थेति**। पथिकगृहेषु। विरहिणीनां वियोगिनीनां

स्विव भवनाभित्तिषु, विरहिणीनिःश्वासधूमश्यामलीक्रियमाणेष्विव पान्थावसथेषु, कस्तूरिकासलिलसिच्यमानास्विव कामुकविलासवासवेश्मवाटीषु, मदान्धसिन्धुरनिरुध्यमानेष्विव नृपभवनाङ्गणेषु, कलितकालकञ्चुकायामिव गगनलक्ष्म्याम्, मदनशरनिकरविद्रुतदरिद्रविटविषादानलस्फुलिङ्गेष्विव रङ्गत्सु ज्योतिरिङ्गणेषु, काञ्चनीषु तिमिरकरिकुम्भभेदभल्लीष्विव निशितासु प्रदीप्यमानासु प्रदीपकलिकासु, प्लवमानपाण्डुपुण्डरीककल्माषितकालिन्दीपरिस्यन्दसुन्दरेऽमृतमथनक्षणक्षुब्धक्षीरसागररसबिन्दुस्तबकितनारायणवक्षःस्थल इव कांचिदपि श्रियं कलयति ताराविराजिते वियति, विटङ्कान्तमनुसरन्तीषु वेश्यासु वेश्मपारापतपतत्रि-

निःश्वासधूमेन अभितुल्योच्छ्वासपवनधूमेन श्यामलीक्रियमाणेष्विव । कामुकानां कामिनां विलासार्थानां वासवेश्मनां निवासगृहाणां वाटीषु उद्यानेषु । **कस्तूरीति** । मृगमदजलेन सिच्यमानास्विव । **नृपेति** । राजगृहचत्वरेषु । **मदेति** । मदोन्मत्तगजैः आक्रम्यमाणेष्विव । गगनमेव लक्ष्मीः श्रीः तस्यां । यद्वा गगनस्य लक्ष्म्यां । कलितः कृतः कालः कृष्णः कञ्चुकः चोलकः यया तथाभूतायामिव । मदनशरनिकरेण विद्रुतानां पलायितानां दरिद्रविटानां विषादानलस्य दुःखाग्नेः स्फुलिंगेषु कणेष्वित्युत्प्रेक्ष्यमाणेषु ज्योतिरिगणेषु खद्योतेषु रङ्गत्सु लसत्सु । यद्वा—चलत्सु सत्सु । काञ्चनीषु स्वर्णमयीषु निशितासु तीक्ष्णाग्रासु तिमिराणां अन्धकाराणामेव करिणां गजानां कुम्भभेदे मस्तकभेदने भल्लीषु शस्त्रविशेषेष्वित्युत्प्रेक्ष्यमाणासु तासु प्रसिद्धासु प्रदीपानां कलिकासु कोरकेषु निशि रात्रौ प्रदीप्यमानासु सतीषु । प्लवमानैः चलद्भिः पाण्डुपुण्डरीकैः श्वेताब्जैः कल्माषितः चित्रितः कालिन्द्याः यमुनायाः परिस्यन्दः प्रस्रवणं प्रवाहइति यावत् । तद्वत् सुन्दरे । ताराभिः नक्षत्रैः विराजिते वियति गगने अमृतमथनस्य क्षणे काले क्षुब्धस्य लोडितस्य क्षीरसागरस्य रसबिन्दुभिः क्षीरकणैः स्तबकित सञ्जातगुच्छ व्याप्तमिति यावत् । यत् नारायणस्य वक्षःस्थलं तस्मिन्निव । काञ्चित् श्रियं शोभां अनिर्वचनीयाञ्च कलयति प्राप्नुवतिसति यमुनाप्रवाहः विष्णुवक्षश्च गगनस्योपमान पुण्डरीकाणि क्षीरबिन्दवश्च ताराणामुपमानम् । वेशेन नेपथ्येन शोभन्त इति वेश्याः "कर्म वेशाद्यत्" इति यत् । यद्वा वेशे वेश्यावाटे भवाः वेश्याः "दिगादिभ्यो यत्" इति यत् । वेश्यासु गणिकासु कान्त प्रियं विटं भुजङ्ग अनुसरन्तीषु-अनुगच्छन्तीषु । **वेश्मेति** । गृहकपोतपक्षिततिषु च । विटङ्कः पक्षिणामावासयष्टेरुन्नतांशः तस्यान्तं मध्यं अनुसरन्तीषु आश्रयन्तीषु । अटन्तीति अटाः कुलानां अभीष्टकान्तगृहाणां अटाः कुल-

पङ्क्तिषु च, भ्रमरसंगतासु कुलटासु कुमुदिनीषु च, नदीपालिविरहितेषु चत्वरेषु चक्रवाकमिथुनेषु च, जाते जरद्गवयकायकालकान्तिकाशिनि निशावतारे, तरुणतमालकाननमिवाञ्जनगिरिगुहागर्भमिवेन्द्रनीलमणिमहामन्दिरोदरमिव विशति सकलजीवलोके स लोकेश्वरः "प्रिये प्रियंगुमञ्जरि, प्रसादय प्रणतप्रियकारिणमभङ्गानङ्गदर्पहरं हरम्। अहं च तदाराधनावधानमनुविधास्यामि" इत्यभिधाय यथावासमयासीत् ॥

ततश्च ।

अखण्डितप्रभावोऽथ प्रदोषेणान्धकारिणा ।
तस्याश्चित्ते स्थितः शंभुरुदयाद्रौ च चन्द्रमाः ॥ ३१ ॥

टाः स्वैरिण्यः "शकन्ध्वादिः" तासु । कुमुदिनीषु सितोत्पलयुक्तसरसीषु च भ्रमे भ्रमणे रसं तात्पर्यं गतासु पक्षे भ्रमरैः भृङ्गैः सङ्गतासु युक्तासु । चत्वरेषु अङ्गणेषु (नेति भिन्न पदम्) दीपालिभिः दीपपङ्क्तिभिः विरहितेषु न असत्सु । **चक्रेति** । कोकद्वन्द्वेषु च । नदीनां पालिषु प्रदेशेषु "पालिः कर्णलतायां स्यात् प्रदेशे पङ्क्तिचिह्नयोः" इत्यजयः । विरहितेषु वियुक्तेषु सत्सु । निशायाः रात्रेः अवतारे आविर्भावे । जरतः वृद्धस्य गवयस्य गोसदृशमृगविशेषस्य कायवत् शरीरवत् कालकान्त्या श्यामशोभया काशते शोभत इति तच्छीले जाते सति । सकले जीवलोके तरुणं प्रौढ तमालकाननं विशतीवेत्युत्प्रेक्ष्यमाणे सति । अञ्जनगिरिगुहायाः गर्भे मध्य विशतीव । इन्द्रनीलमणिभिः (रचितम्) महत् यन्मन्दिरं गृहं तस्योदरं मध्यं विशतीव च सति । सः लोकेश्वरः भीमभूपतिः । प्रिये हे भार्ये प्रियङ्गुमञ्जरि प्रणतानां प्रणतिकृताम् । भुक्ताब्राह्मणाः इतिवदर्शआद्यच् । प्रियकारिणं अभीष्टकृतम् । अभङ्गं अकुण्ठित अनङ्गस्य मन्मथस्य दर्पं गर्वं हरतीति तथोक्तम् । हरं शिवम् । प्रसादय पूजादिभिः प्रसन्न कुरु । अहञ्च तस्य शिवस्य आराधने पूजने अवधानं जागरूकताम् । अनु विधास्यामि त्वां अनुसृत्य अनुपदं वा करिष्यामि इति अभिधाय उक्त्वा । यथावासं आवासमनतिक्रम्य निवासस्थानमित्यर्थः । अयासीत् अगात् ॥

**अखण्डितेति** ॥ अथ प्रकृष्टदोषेण अन्धकनाम्ना अरिणा शत्रुणा अखण्डितः अव्याहतः प्रभावः महिमा यस्य सः । शम्भुः तस्याः प्रियङ्गुमञ्जर्याः । चित्ते मनसि स्थितः । अन्धकारिणा अन्धकारवता प्रदोषेण रजनीमुखेन न खण्डितः प्रभायाः आवः वृद्धिः यस्य सः । वृध्यर्थात् अवधातोर्भावे घञ् । चन्द्रमाश्च उदयाद्रौ उदयगिरौ स्थितः । अत्र शिवचन्द्रयोः श्लेषः ॥३१॥

बिभ्रते हारिणीं छायां चन्द्राय च शिवाय च ।
नभोगरुचये तस्मै नमस्कारं चकार सा ॥ ३२ ॥
नित्यमुद्वहते तुभ्यमन्तः सारङ्गरञ्जितम् ॥
भूतिपाण्डुर गोवाह सोम स्वामिन्नमो नमः ॥ ३३ ॥

एवं च नातिचिरात्

क्षुभ्यत्क्षीरसमुद्रसान्द्रसलिलोल्लोलैरिव प्लावयँ-
ल्लोकं लोचनलोभनः स्मरसुहृज्जातः स चन्द्रोदयः ।
यस्मिन्संभृतवैरदारुणरणप्रारम्भिणो भ्राम्यतः
क्रुद्धोलूककदम्बकस्य पुरतः काकोऽपि हंसायते ॥ ३४ ॥

**बिभ्रत** इति । हरिणस्येमां हारिणीं मृगसम्बन्धिनीं छायामङ्कं बिभ्रते धारयते । नभः गच्छतीति नभोगा आकाशव्यापिनी रुचिः कान्तिर्यस्य तस्मै । शिवपक्षे हारिणीं रम्यां छायां कान्तिं बिभ्रते । न भोगे अस्मदादिवत् विषयानुभवे रुचिः प्रीतिर्यस्य तस्मै । तस्मै यः उदयाद्रौ स्थितः तस्मै चन्द्राय । तस्मै " ओं तत् सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः" इति गीतोक्तरीत्या ब्रह्मवाचकतच्छब्दनिर्दिष्टाय शिवाय च । सा प्रियङ्गुमञ्जरी । नमस्कारं चकार । अत्र पूर्ववदलङ्कारः ॥ ३२

**नित्यमिति** । भूत्या भस्मना पाण्डुर शुभ्र गौः वृषः वाहः वाहनं यस्य तस्य सम्बुद्धिः गोवाह । सोम उमयासहित स्वामिन् ईश्वर । अन्तः कण्ठमध्ये सारं उत्कृष्टं गरं कालकूट जितं महिम्ना स्तम्भितशक्ति यथा तथा नित्यं उद्वहते बिभ्रते तुभ्यं नमः नमः पुनःपुनः नमोस्तु । आभीक्ष्ण्येद्विर्वचनम् । चन्द्रपक्षे भूत्या जन्मना स्वभावेनेत्यर्थः पाण्डुर श्वेत । गाः किरणान् वहतीति गोवाहः " कर्मण्यण् " । तस्य सम्बुद्धिः गोवाह स्वामिन् सोम चन्द्र अन्तः बिम्बमध्ये सारङ्गः मृगएव रञ्जित लाञ्छनम् । भावे क्तः । नित्यं उद्वहते तुभ्यं नमोनमः । अत्र पूर्ववदलङ्कारः ॥ ३३ ॥

**नातिचिरात्** । शीघ्रम् । **क्षुभ्यदिति** । क्षुभ्यतः लोडनङ्गच्छतः क्षीरसमुद्रस्य सान्द्रैः निबिडैः सलिलस्य जलस्य उल्लोलैः महातरङ्गैः । लोकं प्लावयन् व्याप्तं कुर्वन्निव (अत्रोत्प्रेक्षा) लोचने लोभ्येते अनेनेति लोचनलोभनः सकलजननयनानन्दनइत्यर्थः। स्मरस्य कामस्य सुहृत् सखा कामोद्दीपक इत्यर्थः।सः चन्द्रोदयः जातः । यस्मिन् चन्द्रोदये सम्भृतं पूर्णं यद्वैरं शत्रुत्वं तेन दारुणे क्रूरे रणे युद्धे प्रारम्भिणः प्रकृष्टारम्भयुक्तस्य (अत एव काकदमनाय) भ्राम्यतः अटतः क्रुद्धस्य कुपितस्य उलूककदम्बकस्य घूकबृन्दस्य पुरतः अग्रे काकोपि स्वभावश्यामः वायसोपि हंसः

अपि च ।

श्च्योतच्चन्दनचारुचन्द्ररुचिभिर्विस्तारिणीभिभरा-
ज्जातेयं जगती तथा कथमपि श्वेतायमानद्युतिः ।
उन्निद्रो दिनशङ्कया कृतरुतः काको वराकः प्रिया-
मन्विष्यन्पुरतः स्थितामपि यथा चक्रभ्रमं भ्राम्यति ॥ ३५ ॥

अपि च ।

मुग्धा दुग्धधिया गवां विदधते कुम्भानधो वल्लवाः
कर्णे कैरवशङ्कया कुवलयं कुर्वन्ति कान्ता अपि ।
कर्कन्धूफलमुच्चिनोति शबरी मुक्ताफलाकाङ्क्षया
सान्द्रा चन्द्रमसो न कस्य कुरुते चित्तभ्रमं चन्द्रिका ॥ ३६ ॥

श्वेतखगः इवाचरति हंसायते । अत्रोपमोत्प्रेक्षातद्गुणालङ्काराः । तद्गुणलक्षणन्तु— "तद्गुणः स्वगुणत्यागादन्यदीयगुणग्रहः" इति । शार्दूल...वृत्तम् ॥ ३४ ॥

**श्च्योतदिति** ॥ भरात् सान्द्रतया यद्वा भरं अतिशयं प्राप्य । ल्यब्लोपे पञ्चमी । विस्तारिणीभिः विस्तारयुक्ताभिः श्च्योतन्तीभिः क्षरन्तीभिः चन्दनरसवत् चारुभिः रम्याभिः यद्वा श्च्योतच्चन्दनरसवत् चारुभिः चन्द्रस्य रुचिभिः कान्तिभिः कथमपि केनापि प्रकारेण श्वेतायमाना श्वेतवर्णवतीवाचरन्ती द्युतिः विविधनीलपीतादिशोभा यस्यां सा । इयं जगती भूः तथा तादृशप्रकारवती जाता । यथा येन प्रकारेण दिनं अहः इति शङ्कया भ्रमेण उन्निद्रः उत्सृष्टस्वापः अतएव कृतं रुतं शब्दः येन सः वराकः शोच्यः काकः पुरतः स्थितामपि प्रियां ज्योत्स्नावशात् हंसीभ्रमदां कार्कं अन्विष्यन् गवेषमाणस्सन् चक्रवत् कुलालचक्रवत् यद्वा चक्रस्य समीपवर्तिनीमपि प्रियां रात्रौ अन्विष्यतः चक्रवाकस्येव भ्रमः भ्रमणं यस्मिन् कर्मणि तद्यथा भवति तथा भ्राम्यति भ्रान्तिं गच्छति । अत्र भ्रान्तिमदुपमालङ्कारौ स्पष्टौ । शुक्लगुणसमृद्धिवर्णनादुदात्तालङ्कारश्च । अयमुपरितनश्लोकत्रयेपि । तल्लक्षणन्तु—"यत्र महासमृद्धिशालिवस्तु वर्ण्यते तत्रोदात्तालङ्कृतिः" इति मदीयशिवार्थालङ्कारस्तवटीकायाम् । शार्दूल...वृत्तम् ॥ ३५ ॥

**मुग्धा इति** ॥ मुग्धाः मूढाः वल्लवाः गोपाः दुग्धं क्षीरमिति धिया मत्या चन्द्रिकां दुग्धमिति मत्वेत्यर्थः । गवां धेनूनां अधः अधस्तात् कुम्भान् घटान् विदधते कुर्वन्ति दोहाय निक्षिपन्तीत्यर्थः । कान्ताः अपि सततपरिचितोत्तंसरचनाः विलासिन्योपि (किमुतमुग्धगोपादयः) कैरवं सितोत्पलमिति शङ्कया भ्रमेण कर्णे श्रोत्रे कुवलयं अर्थात् शुक्लोत्पलं कुर्वन्ति चन्द्रिकां कुमुदत्वेनाशङ्क्य कर्णावतंसी-

यत्र च

मुक्तादाममनोरथेन वनिता गृह्णन्ति वातायने
गोष्ठे गोपवधूर्दधीति मथितुं कुम्भीगतान्वाञ्छति ।
उच्चिन्वन्ति च मालतीषु कुसुमश्रद्धालवो मालिकाः
शुभ्रान्विभ्रमकारिणः शशिकरान्पश्यन्न को मुह्यति ॥ ३७ ॥

अपि च ।

किं कर्पूरकणाः स्रवन्ति वियतः किं वा मनोनन्दिनो
मन्दाश्चन्दनबिन्दवः किमु सुधानिष्यन्दधारा इमाः ।
इत्थं भ्रान्तिममी जनस्य जनयन्त्यङ्गे लगन्तः परा-
मिन्दोः कुन्दविकासिकुड्मलदलस्रक्सुन्दरा रश्मयः ॥ ३८ ॥

कर्तुं यतन्त इत्यर्थः । शबरी पुलिन्दाङ्गना मुक्ताफलं इत्याकांक्षया वाञ्छया कर्कन्धूफलं बदरीफल उच्चिनोति उच्चित्य गृह्णाति । चन्द्रमसः चन्द्रस्य सान्द्रा निबिडा चन्द्रिका कौमुदी । कस्य चित्ते भ्रमं भ्रान्तिं न कुरुते । सर्वस्यापि जनस्य मनसि भ्रान्तिं कुरुत इत्यर्थः । अत्र भ्रान्तिमान् अर्थान्तरन्यासश्चालंकारौ ॥ पूर्ववद्वृत्तं ॥ ३६ ॥

**मुक्तेति** ॥ वनिताः स्त्रियः मुक्तदामानि मुक्ताहारा इति मनोरथेन वाञ्छया वातायने गवाक्षे (प्रविष्टान्शशिकरान्) गृह्णन्ति । गोष्ठे गोस्थाने गोपवधूः गोपिका कुंभीं कलशं गतान् (शशिकरान्) दधि इति (मत्वा) माथितुं विलोडयितुं वाञ्छति अभिलष्यति । कुसुमेषु श्रद्दधत इति श्रद्धालवः आसक्ताः "स्पृहिग्रहि" इत्यादिना आलुच् । माला एषामस्तीति मालिकाः "व्रीह्यादिभ्यश्च" इति ठन् । यद्वा मालशिल्पमेषामिति मालिकाः मालाकाराः "शिल्प" इति ठन् । मालतीषु जातिषु (प्रसृतान् शशिकरान् जातिपुष्पाणीति मत्वा) उच्चिन्वन्ति उच्चेतुं यतन्त इत्यर्थः । तस्मात् शुभ्रान् विभ्रमं विलासं विशेषेण भ्रमञ्च कुर्वन्तीति तच्छीलास्तान् शशिनः चन्द्रस्य करान् किरणान् पश्यन् कोनमुह्यति सर्वेपि मुह्यन्तीत्यर्थः । अलवृत्तालकारौ पूर्ववत् ॥ ३७ ॥

**किमिति** । कर्पूरस्य घनसारस्य कणाः लवाः वियतः आकाशात् स्रवन्ति स्यन्दन्तेकिं । वा उत मनः नन्दयन्ति आह्लादयन्तीति तच्छीलाः मन्दाः सूक्ष्माः जाड्यकारिणोवा चन्दनबिन्दवः चन्दनरसशीकराः वियतः स्रवन्ति किं । इमाः सुधानिष्यन्दस्य अमृतप्रवाहस्य धाराः आसाराः वियतः स्रवन्ति किमु । इत्थं एवं (अस्य भ्रान्तिमित्यनेनसम्बन्धः) जनस्य अङ्गे लगन्तः सजन्तः कुन्दस्य माघ्यस्य

इति जनितमुदिन्दोः सिन्दुवारस्रगाभं
किरति किरणजालं मण्डले दिङ्मुखेषु ।
हरचरणसरोजद्वन्द्वमाराधयन्ती
शुचिकुशशयनीये साथ निद्रां जगाम ॥ ३९ ॥

इति श्रीत्रिविक्रमभट्टविरचितायां दमयन्तीकथायां
हरचरणसरोजाङ्कायां द्वितीय उच्छ्वासः ॥

विकासिनां विकसनशीलानां कुड्मलदलानां कोरकदलानां स्रजः दामानीव सुन्दराः इन्दोः अमी रश्मयः किरणाः (जनस्य) परां अधिकां भ्रान्तिं जनयन्ति । अत्र उपमा सन्देहः भ्रान्तिमांश्चालकाराः । वृत्तं पूर्ववत् ॥ ३८ ॥

**इतीति** । अथ इति एव जनिता उत्पादिता मुत् हर्षः येन तत् सिन्दुवारस्रजः इन्द्रसुरभिपुष्पदाम्नः आभेवाभा यस्य तत् । किरणाना जालं वृन्दं । दिशाम्मु खेषु किरति वितन्वति (शत्रन्तं) इन्दोः मण्डले हरचरणसरोजद्वंद्वं आराधयन्ती ध्यायन्ती पूजयन्तीवा सा प्रियङ्गुमञ्जरी शुचिनि शुद्धे कुशशयनीये दर्भविरचिततल्पे निद्रां जगाम सुष्वाप । अत्र उपमालङ्कारः । मालिनीवृत्तम् ॥ ३९ ॥

श्रीनारायणशर्मा श्रीनलचम्प्वा द्वितीयमुच्छ्वासम् ।
परिमलसंज्ञव्याख्यासुरभितमतनुतसिताटवीवासी ॥

**इति चेन्नपत्तनविराजमान पच्चयप्पपाठशाला संस्कृताध्यापक**
**श्वेतारण्य नारायणशास्त्रिविरचिता नलचम्पू**
**द्वितीयोच्छ्वासव्याख्या परिमलाख्या**
**पूर्तिमागता.**

॥ शिवम् ॥